श्रीसखाराम नेमचंद ग्रंथमाला. १२९

# कथाकुसुमावलिः ।

काव्यतीर्थोपाधिविभूषितेन

नेमिनाथसूनुना जयकुमारशर्मणा विरचिता

माणिकचन्द्र-दिगंबर-जैन-परीक्षालय-मंत्रिणा

"रावजी सखाराम दोशी"

इत्यनेन प्रकाशिता च ।

षोडशपुरस्थ श्रीकल्याणमुद्रणालये मुद्रितेयं ।

प्रथमावृत्तिः १०००

१०.३०.

मूल्यं आणकाष्टकम्



## समर्पणश्लोकाः ।

कामं भवन्तु धनिनोऽपि सहस्रशोऽन्ये
दृष्टो मया न नव कोऽपि समानधर्मा ।
नेत्रोत्सवोऽपि कुसुमस्तवको यथा त्वं
यो बद्धकङ्कण इवार्थिजनप्रमोदे ॥१॥

धन्यावुभावपि युवां गुणसौरभेण
लोकस्य मूर्ध्नि निहिता स्थितिरात्मकीया ।
येन द्वयेन खलु दिङ्मुखचारिकीर्ति-
रन्योन्यसङ्गमवशादधिगम्यतां श्रीः ॥२॥

यस्याश्रयेण तनुवाग्विभवोऽस्मि जातो
'दोशीकुलोद्भवसखात्मजरावजी' सः ।
अल्पा कृतिः सुमनसामिव मूल्यमर्घ्य
हस्तेऽस्य राजतु कथाकुसुमावलिर्मे ॥३॥

——जयकुमारशर्मा ।



सत्सौरभं दिशि दिशि त्वमिदं प्रसार्य ।

सन्तोष्य भूरिरसिकालिगणं च कामम्॥

भूया अशेषजनतादरपात्रमेवं, ।

भोः पुष्पगुच्छ! किमतः परमर्थनीयम्॥

—जयकुमारशर्मा ।

# विदुषामभिप्रायाः

**Dr. R. N. Dandekar,**
M. A. Ph. D.
Department of Sanskrit
and Ancient Indian Culture.
Fergusson College,
POONA 4.

I read with great interest a major part of the 'Kathakusumavali' a book of selected Sanskrit passages, edited by Mr. Kshirsagar. A significant feature of this work, which distinguishes it from any other work of the same type, is the altogether new region in the rich domain of Sanskrit literature which is represented here. The contribution of Jainism to Sanskrit literature, though so far not adequately estimated, has been considerable. Here, in this book, Mr. Kshirsagar makes a laudable attempt to introduce to the students Jain life and culture, sometimes from original sources, sometimes through his own words. The passages selected show a great variety in matter and in form and they are conveniently arranged to the needs of advancing students of Sanskrit. The editor's own style is sufficiently lucid and graceful. The exercises [ pariksha ] given at the end of each lesson, a collection of illustrations of Sanskrit

idiom, appended at the end, and the Sanjivani giving the Marathi and particularly Hindi translation of difficult passages will be greatly appreciated.

I hope and trust that the book will be found useful by those for whom it is intended.

3rd. July 1939. (Dr.) R. N. DANDEKAR. M. A., PH. D.

—:o:—

स्वस्ति । श्रीमत्क्षीरसागरमहाभागैर्विरचिता ‘ कथाकुसुमावली ’ सानन्दं सकौतुकं च अवलोकिता अस्माभिः । एतद्गतपाठविरचनायां यानि संस्कृतकविधुरीणानां वाग्विशेषकुसुमानि महता कौशलेन संग्रथितानि अन्तरा अन्तरा दरीदृश्यन्ते तानि खलु कामपि शोभामावहन्ति कथागुच्छस्यास्य । इमे पाठाः छात्रैः सावधानं समधीताश्चेत् तेषां बहु उपकुर्युरिति दृढीयान्नो विश्वासः ।

के. ना. वाटवे एम. ए.
प्रोफेसर संस्कृत व मराठी स. प. कॉलेज. पुणे

—:o:—

अत्रभवद्भिः क्षीरसागरोपाह्वैः शिष्यसहमुत्रा सौहार्देन सादरमवलोकनार्थं समर्पितायाः स्वरचितायाः कथाकुसुमावल्लेः सुमनसां सौरभं सुनिपुणतया सेवमानस्य मे मानसं कामपि महतीं मुदं निरविक्षत् । शिष्यत्व एवैतेषां गीर्वाणवाक्पाटवं काव्यनिर्मितिकौशलं

च मे प्रतीतिपथमुपयातमासीत् । अधुना च तदेव संस्कृति-विशेषमापन्नं बालसुगमग्रन्थनिष्पत्त्यानया परिणतं सुतरां विराराज्यते। एतद्ग्रन्थगतकथानां दर्शनमधुरिम्णा, प्रसादगरिम्णा, विनोदमहिम्ना तथा च वस्तुनावीन्येन यथार्थतामनायि नामात्मनः क्षीरसागरैरेतैः। तेषु तेषु पाठेषु संवलितानि तानि तानि सम्यञ्चि चित्राणि सौकर्येणाध्येतॄणां कथार्थावबोधायैव संजायेरन्। अनुपाठमनुस्यूतानां नानाविधानां परीक्षाणां पठितनिगमने, व्याकरणविशेषविज्ञाने, वाक्सौष्ठवसाधने च शिक्षितव्यानां सुमहानुपयोगः स्यात्। अपूर्वः कोऽप्ययमत्र सूक्तिसुधासिन्धुरुल्लसति यस्याननुभूतचराः खलु सूक्तिसुधोर्मयः। यत्रालोडनं च बालानां नितरामुपकुर्वीत। तथा चैकस्मिन् स्थले संकलिता वाग्रचनाविशेषा, अर्थावबोधिन्यो विपुलाष्टिप्पण्यो, विस्तृतः शब्दकोषश्चेत्यत्र सर्वा अप्यभिनवपरिपाट्यः समुन्मिषन्ति येनेयं कथाकुसुमावलिर्निखिलानामाधुनिकानामध्यापकाना मध्यापितानां च विशेषेण चांग्लपाठशालागत पञ्चमवर्गस्थितानां विद्यार्थिनां रुचिरां रुचिमत्युपयोगित्वं चावहेदेवेत्याशास्यते। अन्ते च शिष्यमित्राणां क्षीरसागराभिधानामेतद्‌नूतनोऽयं प्रयत्नः समीहितफलसंसिद्ध्या शिवतातिर्भूयादिति शम्।

पन्तोपाह्वो मयूरतनुजन्मा विष्णुशर्मा

संस्कृताध्यापकः

( नू. म. वि. हायस्कूल, पुणे , बी. ए. एस टी सी.

—:०:—

श्रीमता मच्छिष्येण जयकुमारशर्मणा लिखितेयं "कथा-कुसुमावलिः" साकल्येन मया सकुतूहलं पठिता । इदमाङ्ग्ल-शालायां संस्कृतभाषाध्येतॄणामतीवोपयुक्ता वर्तते । अत्र ह्यद्यतनीं पाठकोत्तमैः पुरस्कृतां पद्धतिमनुचिन्त्य पाठाः प्रयुक्ताः । निसृतः खलु निसर्गत एव कर्तुर्लेखनीतः सर्वोऽप्यत्रत्यो गद्यविभागः । अभिजातवाक्यानां प्रयुक्तत्वेन तस्य पठनेन संस्कृतगद्यपद्यवाङ्मयादि-ग्रन्थेषु विद्याभिलाषिणां छात्राणां प्रवेशः सुलभः स्यात् । रचना-प्रयोगादिषु व्याकरणादि, आङ्ग्लशालास्थपञ्चमश्रेण्यां यत्प्रचलितं तदेवानुसृतम् । श्लोका बहवः प्राचीनग्रन्थेभ्य एवोद्धृताः । ते च "महापुराणं" "वर्द्धमानचरितं" "धर्मशर्माभ्युदयकाव्यं" इत्यादिभ्य एव प्रायेण विवेचिताः । ते सर्वेऽपि नूनं विद्यार्थिनां बुद्धिग्राह्याः ।

अस्य ग्रन्थस्य पठनेन छात्राणां शीलसंवर्द्धनद्वारा गीर्वाणभाषा सम्यक्परिचिता स्यात् । मुहूर्तराज इत्यस्मिन् पाठे प्रयुक्ताः श्लोकाः कर्तुः कवित्वं स्फुटं प्रदर्शयन्ति । द्वादशपाठस्था प्रश्नावलिश्छात्राणां मतिं प्रेरयितुं प्रभवत्यलम् ।

अत्रत्यं रचनावैचित्र्येण प्रतीयमानं नावीन्यं सर्वथा रमणीयतां पुष्याति । तच्च कस्यापि वाचकवर्गस्य नितरां भवति मनोहारि । अनेन स्मारिता "क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः" इयं माघकवेरुक्तिरिह यथार्थत्वं प्रतिपद्यते । अत्र हि क्वाचिद्रम्यः कथाप्रबंधः, कुत्रचित्संलापपरा ह्यार्थबन्धुरा वाग्विशेषाः, क्वापि च

नाट्यप्रचुरा भाषासरणिरित्येतद्गुणसौष्ठवं रसिकहृदयानां विपश्चितां हृदयान्युत्तरलीकुरुते ।

तथा चान्ते महाराष्ट्रभाषायामिव "हिन्दी" भाषायामप्यर्थबोधिका व्याकरणबोधिका च या सञ्जीवनी निवेशिता सा चासेतुहिमालयं विद्यार्थिवर्गाणां बहुमता स्यादत्र नास्ति संदेहलवोऽपि । तत्रैव समावेशितो वाक्यरचनाविशेषश्चापि मातृभाषायामनुवादे श्रेयो भावमावहेत् । एतदेवास्य पुस्तकस्य वैशिष्ट्यमिति मे मतिः । एतत्पुस्तकमध्येतुकामानां बालानां भाषाज्ञानसंवर्धनाय सुतरामलं स्यादित्याशासे ।

विदुषामनुचरः

आषाढशुक्ल पञ्चम्यां<br>१८६१ शाकाब्दे<br>सोलापुर.

**बागेवाडीकरोपनामा**<br>**पंडितवासुदेवशास्त्री.**<br>संस्कृताध्यापकः ह. दे. शालास्थः ।

—:०:—

श्रीमद्भिः क्षीरसागरकुलोत्पन्नैर्जयकुमारशर्मभी रचिता कथाकुसुमावलिर्मया सुनिपुणमवलोकिता । आङ्ग्लशालायां पञ्चमश्रेण्यां प्रविष्टानां छात्राणां संस्कृतभाषापरिज्ञानवृद्ध्यै योग्येयमिति मे मतम् । अत्रत्याः सकला अपि पाठा विनयादिसद्गुणपोषणपराश्छात्राणां भविष्यन्तीति मे निश्चयः । जिनसेनादिमहाकवीनां सूक्तयः पद्यपाठेषु सङ्कलिता गुरूणामन्तेवासिनां च मनःसु प्रमोदं जनयिष्यन्तीति मे विश्वासः । अस्या अध्ययनेन सर्वधर्मसम्मतानां अहिंसासत्यादिधर्मतत्वानां परिज्ञानं छात्राणां भवेदत

एनामवहितमनसा ते पठन्त्वित्याशास्य विरम्यतेऽभिप्रायलेखनात् ।

**फडकुलेत्युपाह्वः पार्श्वनाथतनयो जिनदासशर्मा**

—:०:—

गीर्वाण्यामारचिता कथाकुसुमावलिपुस्तिकावलोकितास्माभिः । महापुण्यशालिनां लोकोत्तरकार्यकारिणां स्वीयाचरणैः स्वपरोध्दारकाणां प्रख्यातमहात्मनामादर्शाख्यानान्यस्मिन् पुस्तके प्रदर्शितानि विदुषा ग्रन्थकर्त्रेति । एतदीया लघुवाक्यावलिः शब्दसारल्यञ्च संस्कृताभ्यास वर्धने सहायकमस्त्यन्तेवासिनाम् । कथाभागव्याकरणव्युत्पत्ति-परिज्ञानाय परीक्षाख्यया प्रश्ना अपि निवेशिताः प्रत्येकपाठे । पुस्तकान्ते विशिष्टपदानां शद्बानाञ्चार्थो महाराष्ट्रदेवनागरीभाषयोः स्फुटीकृतः श्रीमत्काव्यतीर्थेन पं. जयकुमारशर्मणा महोदयेनैतद्ग्रन्थ-रचयित्रा । पुस्तकस्यास्य प्रसारच्छात्राणां व्युत्पत्तिविधायकश्चित्ता-कर्षककथाप्रसङ्गेन हृदयप्रभावकश्चेत्यस्मत्सम्मतिः ।

**मक्खनलालः शास्त्री.**

[ न्यायालंकारवादीभकेसरीविद्यावारिधि,

धर्मधीरेत्युपपदविभूषितः ]

—:०:—

# शब्दद्वयम् ।

इमां 'कथाकुसुमावलिं' वाचकवृन्दस्य हस्ते समर्पयितुममन्दानन्दस्य कोटिमधिरोहति मे मनः । विश्वविद्यालयस्यार्वाचीनशिक्षणपद्धतिं पुरस्कृत्याङ्ग्लशालायाः पञ्चमकक्षायामध्येतॄणां कुमाराणां गीर्वाणभाषाज्ञानसंवर्धनाय यथामति लिखितं मयैतत्पुस्तकम् । अत्रत्यो मन्दधियो ममैष नूतनः प्रयत्नः "तुङ्गेऽपि सिध्यत्यधिरोहिणीभिर्यद्वामनस्यापि मनोऽभिलाष" एव वर्तते । तथापि बालसुगमोऽयं मे यत्नो विदुषानपि बहुमतःस्यादिति न मे संशीतिः ।

गीर्वाणभाषायां योऽल्पो मदीयश्चञ्चुप्रवेशः सञ्जातः; स किल षोडशपुरस्थजैनपाठशालाया धर्माध्यापकानां श्रीमज्जिनदासार्यमिश्राणां, पुण्यपत्तनस्थ नू. म. वि. हायस्कूल इत्याख्याङ्ग्लशालागतसंस्कृताध्यापकानां श्रीमत्पंतकुलोत्पन्नविष्णुशर्ममहाभागानां च कृपाप्रसादत एव । आनीतः खलु मुद्रणात् प्राग् गीर्वाणपण्डितप्रकाण्डमण्डलस्य दृग्गोचरं हस्तलिखितोऽयं कथाप्रबन्धः । तस्य सरला सुबोधा मनोहारिणी च वाक्सरणिः कुमाराणामन्तःकरणहरणं कुर्यादिति तैस्तैर्महाभागैर्मयि विश्वासः समुत्पादितः । अत एवामुं ग्रन्थं परिपूर्णतां नेतुं मयैतत् साहसं व्यतन्यत ।

विज्ञप्तिरियं मेऽध्यापकोत्तममिश्रानुद्दिश्य यथा तैः प्रथमं मातृभाषायां पाठतात्पर्यं निवेद्य पश्चाद् द्विस्त्रिर्वा पाठं वाचयित्वा तद्गतकठिनवाग्रचनाविशेषा नितान्तं स्पष्टीकृताश्चेच्छात्रवर्गस्यास्मिन् पुस्तके वज्रसूचिसमुत्कीर्णे मणौ सूत्रस्येव गतिः सुलभा स्यात् । 'मॅट्रिक' परीक्षायाः प्रश्नावलेः प्रचलितं संप्रदायमुररीकृत्यात्र तस्य तस्य पाठस्यान्ते पाठगतव्याकरणाद्यनुरूपः परीक्षारूपेण प्रश्नसमु-

-चयो नियोजितः । तथा च 'महाराष्ट्र " भाषावद् 'हिंदी' भाषायामपि विस्तृता सञ्जविनीसंज्ञिका टिप्पणी, तथैवान्ते निवेशितः 'शब्दरत्नाकरः' छात्राणां बहूपकुर्यादिति दृढतरमाशास्यते ।

अत्र संग्रथितः पद्यविभागः प्राचीनकविधुरीणानां ग्रंथेभ्य एव विवेचितः। क्वचित् स्थले बालानां शीघ्रबोधहेतोर्वाक्यानां क्रियापदानां च मया परिवर्तनं कृतमस्ति । तत्परिवर्तनमपि विपश्चितां रुचिभावमावहेदिति मे मतिः ।

अन्ते पुण्यपत्तनस्थ 'फर्ग्युसन' इति महाविद्यालयस्थसंस्कृतप्राध्यापक 'दांडेकर' महाभागैस्तथा च 'सर परशुरामभाऊ' इत्याख्यमहाविद्यालयस्थप्राध्यापक 'वाटवे' महाभागैर्मम विज्ञप्तिमनुमत्य यत् प्रशंसापत्रं वितीर्णं तेनाहं तेषां महानुग्रहं प्राप्तोऽस्मि। तथा च षोडशपुरस्थ ह. दे. हायस्कूल इत्याख्यविद्यालयगतपण्डित संस्कृताध्यापकश्रीवासुदेवशास्त्रिमहोदयैर्जैनपाठशालागतधर्माध्यापक-पण्डित 'जिनदासार्यमिश्रैः' सानन्दं यन्मे विपुलं साहाय्यं शिष्यसौहार्दं च ग्रन्थमुद्रणे दर्शितं तैः पण्डितप्रवरैरहं भृशमुपकृतोऽस्मि। श्रीमत्पण्डित 'वर्धमानमहाभागैर्विद्याकुमारपंडितवरैश्च हिंदीभाषानुवादे ममोपरिकृतमुपकारं कथं नु विस्मरामि ?

महतीयं खलु ममाकांक्षा यदियं 'कथाकुसुमावलिः' प्रकामं सानन्दं छात्रवर्गेणाघ्रातव्या । तथा च—

वृत्तिर्मरुद्वापवती व साधोःखलस्य वैवस्वतसोदरीव ।
तयोःप्रयागे कृतमज्जनो मे कथाप्रबन्धो लभतां विशुद्धिम् ।

विदुषामनुचरः ।

ता. १२।७।३९ क्षीरसागरोपाह्वो नेमिनाथतनुजनु-
र्जयकुमारशर्मा ।

# कथाकुसुमावलेः पुष्पदर्शिका ।

॥ श्रीः ॥

# कथाकुसुमावलिः ।

---

## वन्दनम् ।

—:०:—

यो विश्वं वेद वेद्यं जननजलनिधेर्भंगिनः पारदृश्वा
पौर्वापर्याविरुद्धं वचनमनुपमं निष्कलंकं यदीयम् ।
तं वन्दे साधुवन्द्यं सकलगुणनिधिं ध्वस्तदोषद्विषन्तं
बुद्धं वा वर्धमानं शतदलनिलयं केशवं वा शिवं वा ॥

## प्रथमः पाठः ।

## अकुतोभयो हि महावीरः ।

पुरा भारतवर्षे महामण्डलेश्वरः सिद्धार्थमहाराजोऽभवत् । तस्य पेशला कुण्डलपुरी नाम नगरी राजधानी। स किल राजेन्द्रः समुद्रं चन्द्र इव स्वजन्मना ज्ञातिकुलमलमकरोत् । अथ तस्य प्राणवल्लभा त्रिशलादेवी नाम महिषी। तस्यामन्तिमस्तीर्थंकरो महावीर-

स्वामी जन्मालभत । सिद्धार्थमहाराजस्तस्य परार्घ्यजन्मना निजवंशं प्रतिष्ठाक्रान्तममन्यत । यथा जयन्तेन शचीपुरन्दरौ तथा महावीरस्वामिना राजा सिद्धार्थो माता त्रिशलादेवी च भृशमनन्दताम् । तस्य बालस्य नाम वर्धमान इत्यासीत् । बालेन्दुरिव प्रभुः प्रत्यहं शुभैः शरीरावयवैर्वृद्धिमपुष्यत् ।

अथ गच्छता कालेन कदाचिन्मध्याह्ने भगवान् वर्धमानकुमारः सवयोभिः स्ववयस्यैः सह क्रीडनार्थं वनमाश्रयत् । तत्र प्रांशुं वटवृक्षमारुह्य पृथुकैः सह रममाणः कुमारो महान्तमपि कालमतिक्रान्तं न ज्ञातवान् । अथ क्रीडाव्यापृतेषु सर्वबालेषु कश्चित् फणाभीषणः सर्पाधिराजः सहसा विटपैः सह वटस्य मूलमावेष्टय स्थितः । तस्य भयावहेन दर्शनेन लुप्तहर्षाः सर्वे ते बाला यथायथमधोऽपतन् । वर्धमानकुमारस्तु मनागपि भयेन विच्छायतां न गतवान् । अन्यवृक्षान्तरिता भूत्वा सर्वे सहचरा भयचकितया दृशा प्रभुं फणिपतिं च पश्यन्तोऽतिष्ठन् । वीतशङ्को वर्धमानकुमारस्तस्य भुजङ्गराजस्य मूर्धनि लीलया चरणौ निवेश्य नृत्यंस्तरुतोऽवतीर्णः । ततश्चासौ कातरभावमापन्नो मित्रगणो हे वर्धमान ! भीषणाकृतिरयं नागो मा तं रुन्द्धीति प्रोच्चैर्दूरत एवाघोषयत् ।

अयं कुमारस्तु भोगिभर्तुर्ग्रीवां बलेन तथा निविडं संघट्टितवान्



चित्रस्यास्याभिप्रायो द्वितीयपृष्ठेऽवलोकनीयः ।

चित्रस्याभिप्रायः षोडशतमपृष्ठेऽवलोकनीयः ।



संसार दर्शन ( मधुबिन्दु )

यथासावहिपतिः क्षणमात्र एव लोहितमुद्वमत् । ततः सर्पाधिराजः पुरुषरूपेणात्मानं प्रकाश्य कुमारस्य पादयोर्निपतन् बद्धाञ्जलिरवदत् । "बालराज ! क्षम्यतामयं भवद्धृतिविघातको जनः । अवैमि भवन्तं त्रैलोक्यवंदनीयं पुरुषोत्तमम् । ज्ञातं मया भवतो विक्रान्तम् । लीलासक्तान्भवतो भापयितुं मयादः फणिरूपं विधृतम् । नाहं भुजङ्गराजः । सङ्गमाख्यः सुरोऽस्म्यहम् । विमानेन नभो विगाहमानस्य मे यानं वटवृक्षस्योपरि स्खलितम् । अत एव मयैतस्मिन्ननुचितसाहसे मनःप्रसङ्गो विहितः । भगवन् भीषयमाणस्यापि भयानको भवान् । भवतो निर्भयवृत्त्या परवानयं जनः संवृत्तः । रचितोऽयमञ्जलिरिदं च पादग्रहणम् । प्रसीदतु दर्शयतु भक्तवत्सलताम" इति । एवमुक्तः स्वभावस्निग्धः कुमारोऽपि सविस्मयस्तं मुक्तवान् । मुक्तमात्र एव च स सानन्दं कुमारमभिनन्द्य तस्य महावीर इति नाम कृत्वा स्वस्थानमुदचलत् ।

नातिचिरं गते च तस्मिन्नुपजाताश्चर्यास्ते सर्वे पृथुकाः कुमारं परितो मिलिताः । सम्मिल्य च "साधु वर्धमान, साधु त्वयाद्य धीरं विक्रान्तमाचरितम् । नो चेद्वयं तु भीत्या मृतकल्पा भवामः स्मः" । इत्युल्लासमयैरालापैः कुमारं समर्च्य सायंतनसमये तं प्रशंसन्तः सर्वे बालाः स्वं स्वं गृहमगच्छन् ।

**नमः श्रीवर्धमानाय धौरेयाय तरस्विनाम् ।**
**येन स्वसारतः सर्पः शिशुनापि नियंत्रितः ॥१॥**

## परीक्षा ।

प्रश्नाः । (अ) अयं वर्धमानकुमारः कः ? । कौ तस्य माता-पितरौ ? । [आ] किमर्थं सर्वे शिशवो वृक्षादधोऽपतन् ? । [ इ ] ततो वर्धमानकुमारेण किं कृतम् ? (ई) कोऽयं सर्पाधिराजः ? । [ उ ] वर्धमानकुमारस्य नाम केन किमर्थं कृतम् ? ।

२ संधिः क्रियताम् । अवदत् + वचनम्, गोविंदः + रमते, बाला + इयम्, कुमारः + अयम्, गच्छन्ति + आलयम्, ललनाः + हसन्ति, पार्थिवाः + पालयन्ति.

३ (अ) व्युत्पत्तिं दर्शयत । भापयितुम्, नृत्यन्, रममाणः, अवैमि [ आ ] समासा विगृह्यन्ताम् । शचीपुरन्दरौ, प्रत्यहम्, भीषणाकृतिः ।

४ प्रयोगान्तरं विधीयताम् । ( क ) दर्शयतु भक्तवत्सलताम् । [ ख ] नाहं भुजंगराजः । (ग) रचितोऽयमञ्जलिः ।

५ वाक्यविच्छेदः संपूर्यताम् । ( अ ) पलाशवृक्षाः— परितो दृश्यन्ते । [ ब ]—सह न गच्छामि । [क] बालः—नमस्करोति ।

---

### द्वितीयः पाठः ।

## उपकारः प्रत्युपकारेण प्रत्यर्पयितव्यः ।

अस्ति हेमाङ्गदे देशे राजपुरं नाम नगरम् । तत्र जीवको नाम कोऽपि महान् दयाशीलो राजपुत्रोऽभवत् । अथ प्रवृत्ते मधु-

मासे कदाचिज्जीवककुमारः स्वमित्रगणेन सह जलक्रीडां कर्तुं वनं गतः। तत्र विहरतस्तस्य कश्चनासन्नमरणः सारमेयो दृक्पथमयात्। क्षतविग्रहस्य तस्य दर्शनेन भूतानुकम्पी भूपतनयो बहु दुःखितो जातः। जीवकस्यान्तःकरणमस्पृशत् परमानुकम्पा। तत्समीपमागत्य करतलेन कुमारस्तारस्वरेणाक्रन्दन्तं तं परामृशन्नभाषत।



"भद्र, केन खलु निर्दयेन नराधमेनैतादृशः क्षतविक्षतोऽसि? भवतु। यथाशक्ति लघूकरोमि ते दुःखम्"। इत्युक्त्वा कुक्कुरं प्रत्युज्जीवयितुं भृशं प्रायतत। तथाप्यसौ मोघप्रयास एव संवृत्तः। भिन्नमर्माणं तं निरीक्ष्यायमचिराद्विगतजीवितो भवेदिति निर्णीय

नृपनन्दनस्तस्य परलोकसुखे बद्धास्थोऽभवत् । परमेश्वरं च हे दयाघन प्रभो ! भवत्वस्य दीनस्य शांतिप्रदः सद्गतिकारकश्च मृत्युरिति सानुक्रोशं प्रार्थयित्वा तत्कर्णमूले मूलमंत्रमुपादिशत्। तदवस्थेनापि भषणेनैकाग्रतयाकर्णितो मंत्रः। वक्तुमसमर्थोऽपि श्वा लांगूलचालनेनात्मनो दयमाने नृपालात्मजे कृतज्ञतां प्रदर्शयन्निव चिरकालं विलोकितवान् । अनन्तरं व्रणवेदना असहमानः कौलेयकः पञ्चत्वं गतः ।

अथ गच्छता कालेन जीवकस्य पुनरपि नगरारामे रन्तुं मतिर्जाता। तत्रागत्याद्वितीय एवाम्रवृक्षस्याधस्तात् परिश्रमविनोदार्थं स किञ्चन शिलातलमुपाविशत् । तस्मिन् काले प्रादुर्भूता भूवरदारकस्य पुरस्तात् काचिद्दिव्यदेहधारिणी पुरुषाकृतिः। तां वीक्ष्य कुमारो विस्मयाविष्टः पृष्टवान् । "आचक्ष्व, भद्र कस्त्वम् ? कुतस्त्यः ? कस्मान्मम समीपमागतोऽसि ?" इति । तदा तेन पुरुषेण सविनयं प्रतिभाषितम् । "देव, विदितमेव भवतो यत्पुरास्मिन्नेवोपवने कश्चन मृतप्रायः सारमेयो भवदनुग्रहं प्राप्तः। भवतैव तस्मिन्ननुक्रोशबुद्ध्यासौ पञ्चमन्त्रोऽश्राव्यत। विद्धि मां तमेव मण्डलम् । भवतो मंत्रप्रभावेणाहं दैवीं तनुं लब्ध्वा सुदर्शननामधेयो यक्षकुलाधिपतिरभवम् । नाथ, कृतार्थीकृतः खल्वहं भवता । अचरमोऽयमुपकारो ममोपरि जातः । का वा भवदनुभावं कथयितुमलं वाणी ? भवतश्चरणसेवायै कृतमिदमागमनम् । द्रुतमेव भवता यस्मिन् कस्मिन्नपि कार्ये सर्वथा नियोजनीयोऽयं किङ्करः ।

भवतः प्रतिप्रियं न कुर्यां चेन्ममेयं सर्वसुखहेतुर्यक्षपदप्राप्तिर्वृथा स्यात् "। इत्यालपन्नञ्जलिं बद्ध्वा नियोगोत्सुकोऽतिष्ठत्। जीवकोऽपि तेन वार्ताश्रवणेन सञ्जातविस्मयो गुह्यकं तमभिहितवान्। 'आर्य ! दिष्ट्या वर्धसे त्वं पुण्यजन्मना। अधुनाहं सर्वथा संपादितार्थो वर्ते '। इति। ततः स पुण्यजनः समागतवति कृच्छ्रे कचिदनुस्मर्तव्योऽयं जन इत्युदित्वा कुमारं प्रणिपत्य सप्रश्रयं च परिष्वज्य परोक्षतामभजत्।

कतिपयैर्दिवसैर्जीवककुमारः शत्रुभिर्हस्तग्राहं गृहीतः। व्यापादनाय चासौ वधस्तम्भमानीयत।



तदा निर्वेदमापन्नः स सहसा सुदर्शनयक्षस्य मनसास्मरत् । मुहूर्तमात्र एव कृतज्ञः कृतज्ञचरः सुदर्शनः प्रकटीभूय चतुर्भुजभूतं जीवकं सपद्येव मुक्तवान् । भूयसा कालेन तस्यैव सुदर्शनयक्षस्य साहाय्येन प्राज्यं राज्यं लब्ध्वा राज्यसुखान्यनुभुञ्जानो दिवसाननयत् ।

## परीक्षा ।

१ प्रश्नाः । [१] किमर्थं जीवकस्य हृदयं दुःखितं जातम् ? [२] केन कारणेन वने कुमारो विस्मयाविष्ट आसीत् ? [३] पञ्चमंत्रस्य प्रभावः कथमदृश्यत ? [४] यक्षो जीवकोपकारस्य प्रत्युपक्रियां कथमकरोत् ?

२ वाक्ये समुपयुज्यन्ताम् । दिष्ट्या, बुध्, कृच्छ्रे, पञ्चत्वं गम्, स्मृ.

३ [अ] कानि रूपाणि ? नियोजनीयः, पृष्टवान्, अनुभुञ्जानः.

(ब) संधिः क्रियताम् । महाराजान्+लभते, बालः+आगतः, प्रभुः+अयम्, तरुः+प्रोन्मूलितः, एषः+कुम्भकारः.

४ प्रयोगान्तरं विधीयताम् । [क] विद्धि मां तमेव मण्डलम् । [ख] जीवककुमारः शत्रुभिर्गृहीतः । [ग] सुदर्शननामधेयो यक्षकुलाधिपतिरभवम् ।

५ (अ) संशोध्यन्ताम् । [१] मामग्रे तिष्ठति । [२] अलंबहु ताडयितुं सोऽप्यशक्तः । [३] अहं त्वां न दयामि ।

( आ ) समासा विगृह्यन्ताम् । भूतानुकम्पी, मृतप्रायः, यथाशक्ति.

---

## तृतीयः पाठः ।

## बालहठः ।

अस्ति सौराष्ट्रेषु द्वारका नाम नगरी । तत्र राजा वसुदेवो राज्ञी देवकी च सुखेन कालं नयतः स्म । अथ कदाचिद्रजन्यां देवी देवकी स्वप्ने गजमैरावतमपश्यत् । अत्यजच्च तत्क्षण एव निद्राम् । ततो वसुदेवमागत्य सात्मनः स्वप्नवर्णनेन तं विदितवृत्तान्तं कृतवती । वसुदेवोऽपि स्वप्नोदन्तं निशम्य सहर्षं देवकीमगदत् । " अयि प्रिये ! फलितमद्य नौ सुदैवं भगवतः परमेश्वरस्य प्रसादतः । आवेदयति द्विरदेन्द्रदर्शनं कल्याणि ! ते तनयजन्म " इति । अनेन स्वप्नफलश्रवणेन तस्या आनखशिखान्तं समचरद्धर्षप्रकर्षः । तत्र मुहूर्तमिव स्थित्वा वल्लभमापृच्छ्य सानन्दं शुद्धान्तं निर्गता ।

अथ दिनेषु गच्छत्सु राज्ञी देवकी सुन्दरं सुतमसूत । स्वप्नानुरूपमेव राजा स्वसूनोर्गजकुमार इति नामधेयमकरोत् । बालचन्द्रमा इव कुमारः प्रतिदिनं वृद्धिमव्रजत् । आक्रमच्च पञ्चमं वयः । एकदा भगवतो नेमिप्रभोर्जयशब्दस्तस्य सहसा श्रुतिपथमवतीर्णः । तदा गजकुमारः स्वमातुरन्तिकमुपेत्योदितवान् ।

गजकुमारः—कोऽयं खलु श्रीनेमिर्भगवान्? कस्य चासौ सुतः? प्रभुगतं सर्वमपि मातः! कच्चित्त्वं मे कथयिष्यसि? बहु कुतूहलमस्ति मेऽस्मिन्विषये।

देवकी—(सहसा स्वगतम्।) केन खलु प्रभोर्नाम कथितम्? हा धिक् हा धिक्। गुरुणापि पुराद्यतं यथा न कदाप्यस्य कुमारस्य कर्णवर्त्म श्रीनेमिनाथस्य नाम समागन्तव्यम्। यतः प्रभोर्दर्शनमेव तस्य विरक्तयेऽलम्। उचितापि प्रार्थना वरं विहन्तुम्। (प्रकाशम्।) वत्स! विलोकयाम्बरतलम्। चन्द्रमा विहरति। ननु पृच्छामि बाल! कति तारकागणास्ते दृग्गोचरं सन्ति? गणय तान्। (इति कुमारस्य मनः परावर्तयितुं यतते।)

गजकुमारः—निःस्पृहोऽहं तारकाः प्रति। प्रथमं नेमिचरितं कथय।

देवकी—[कर्णे।] गगने बहूनि नक्षत्राणि सन्ति। सप्तर्षीणामधिवास आकाश एव। बालक! विलोकय, विलोकय सुधाधवलां चन्द्रिकाम्। (आकाशमङ्गुल्या दर्शयित्वा।) एष गुरुरेष शुक्रः, एष शनैश्चरः। अहो असंख्यानि नक्षत्राणि विराजन्ते।

गजकुमारः— किं मे नक्षत्रैः?। निवेदय नेमिचरितम्। (इति रोदितुमारभते।)

देवकी—[ कातरा स्वगतम् । ] किं करोमि ? कतमेन वा समाश्वासनेनायं रोदनाद्विरमेत् ? । ( प्रकाशम् । ) प्रेक्ष्यतां वत्स ! नेमिस्ते भग्नदारुशकटचक्रस्य ।

गजकुमारः—[ सदृष्टिक्षेपं साकूतं च । ] कुत्र वा मम नेमिः ?

देवकी—[ स्वगतम् । ] किमिति मन्मुखादकस्मात् प्रभुगामी शब्दो निर्गतः ? [ प्रकाशम् । ] वत्स ! भग्नशकटस्य चक्रारं पश्येति भणितोऽसि । गृह्यतामेतद् । रमस्वैतेन सह । [ इति भग्नशकटं सचक्रं तस्य पुरतः क्षिपति । ]

गजकुमारः—( शकटं चक्रं च भूमौ प्रक्षिप्योच्चै रुदन् । ) न मह्यं रोचते क्रीडनकम् । शंस मे भगवतो नेमिस्वामिनश्चरितम् ।

देवकी—[ स्वगतम् । ] न शक्य एषोऽपरेण वस्तुना विरमयितुम् । कथयामि तावत् । का गतिः ? [ प्रकाशम् । ] बाल ! अलं रुदित्वा । नो चेन्न शंसामि किमपि ते ।

गजकुमारः—( सानन्दं रोदनं नियम्य । ) वर्ण्यताम् । अवहितोऽस्मि । [ इति नेत्राश्रु प्रमार्ष्टि । ]

## परीक्षा ।

१ प्रश्नाः [क] गजकुमार इति नामधेयं किमर्थं कृतम् ? [ख] तेन किमाकर्णितम् ? (ग) देवकी तस्य मनः परावर्तयितुं कथमयतत ?

२ समासा विगृह्यन्ताम् । सुधाधवलाम्, प्रतिदिनम्, आनखशिखान्तम्.

३ वाक्ये समुपयुज्यन्ताम् । वि + रम्, कच्चित्, रुच्, ननु.

४ कानि रूपाणि सन्ति ? आपृच्छ्य, समागन्तव्यम्, कल्याणि.

५ संधिः क्रियताम् । अश्वाः + धावन्ति, अस्मात् + चौरात्, मातः + अस्तु + एवम् ।

---

## चतुर्थः पाठः ।

# नेमिवैराग्यम् ।

( ततः प्रविशति देवकी गजकुमारश्च । )

देवकी — अस्ति मे देवुः समुद्रविजयस्य सुतः श्रीनेमिनाथः ।

गजकुमारः–[ समोदम् । ] अम्ब ! समुद्रविजयस्तु मे पितृव्यः । शिवादेवी च मे पितृव्यानी । नेमिनाथो मे भ्राता जातः ।

देवकी —अथ किम् ।

गजकुमारः—कुत्र वसत्यधुना मेऽग्रजो नेमिनाथः ? मातर् ! द्रष्टुकामोऽस्मि मम भ्रातरम् ।

देवकी — ( ससाध्वसं स्वगतम् । ) किमधुनैवास्येयती समुत्कण्ठा ? प्रभुदर्शनमात्रेण निःसंशयमयं निष्परिग्रहो भविष्यति । [ प्रकाशम् । ] ऊर्जयन्तनामानं शैलमधिवसति ।

गजकुमारः—तत्रैव किमर्थं तस्याधिवासः ? इमं महान्तं रम्यं प्रासादं परित्यज्य विजने वन एव किमर्थमेकाकी निवसति ?

देवकी —किं तस्य प्रासादेन ? कृतसर्वपरित्यागः स साधुः । अरण्यवासी च तपस्विजनः। गृहं, राज्यं, मातापितरौ संपदं, सतीं, राजीमतीमपि विहाय स तपस्वी भूतः ।

गजकुमारः—जननि ! का पुनरेषा राजीमती ?

देवकी —[ साश्रुलोचनम् ] तव प्रजावती । मदीया स्नुषा। ( इति रोदिति। )

गजकुमारः—[ मातुरुद्बाष्पे नयने निरीक्ष्य । ] प्रसु ! किमर्थोऽयं बाष्पबिन्दुनिपातः ? ( इति मातरं सान्त्वयति । ) [ मुहूर्तमिव स्थित्वा । ] का तस्या वार्ता ? अपनय मे कुतूहलम् ।

देवकी –[ अंशुकाञ्चलेनाश्रूणि प्रमृज्य । ] अस्ति स्कंधावाराधीश उग्रसेनो नाम भूपः । तस्य राजीमती नाम कन्यारत्नमासीत् । स स्वसुतायाः कारणाद्दूतसंपातं कृतवान् ।

गजकुमारः—किमर्थम् ?

देवकी —तव भ्रात्रा नेमिनाथेन सह विवाहयितुम् ।

गजकुमारः–अहो शोभनम् । ममाग्रजो विवाहबद्धोऽपि संवृत्तः ।

देवकी —नहि नहि । अद्याप्यविवाहित एव वर्तते ।

गजकुमारः—कथमिव ?

देवकी—श्रूयताम् । विवाहसंभारोऽपि रचितः । आगता नानादिग्देशेभ्यो बहवः पार्थिवाः । सर्वत्र हर्षनिर्भराः सञ्जाता वरवधूबांधवाः । वरदेवोऽपि रथेन सीमान्तपूजार्थं चलितः । तत्समये मार्गे— ( इत्यर्धोक्ते गृहीतमौना तिष्ठति । )

गजकुमारः— किं जातम् ?

देवकी—स रथादकस्मादवातरत् ।

गजकुमारः—कस्मात् कारणात् ?



देवकी—[ स्वगतम् । ] कृष्णकापथ्यात् । [ प्रकाशम् । ] तवाग्रजेन श्रीकृष्णेन यवनपारसीकराजानां ग्वाद्यार्थं कारागृहे बहवः पशवो निगडिताः ।

तेषां करुणास्पदं क्रन्दनध्वनिं विश्रुत्य तस्य विराग उपजातः।

गजकुमारः—कृष्णहृदयः खलु कृष्णः। ततस्ततः।

देवकी—मम विवाहार्थमेतादृशानां पशूनां हननम्? धिगिमं मे परिणयमित्युक्त्वा पर्वतं गत्वा तपस्तपस्यंस्तिष्ठति।

गजकुमारः—धन्यः खलु श्रीनेमिर्भगवान्। नेमिस्वामिने शतं मे प्रणामाः। धन्यः खलु दिवसोऽसौ यो भगवतश्चरणमूलं मे दर्शयेत्। का तत्रत्याः प्रजावत्याः प्रवृत्तिः?

देवकी—सापि श्वशुरादिसंप्रार्थितापि भग्नमनोरथा स्ववल्लभमन्वार्यिका भूत्वा तस्मिन्नेव शैले आत्मश्रेयसे यतमाना तिष्ठति।

गजकुमारः—[ प्राञ्जलिं बद्ध्वा। ]

राजीमती धन्यतमार्यिका सा। ममाग्रजो नेमिजिनोऽपि धन्यः।
वन्दे द्वयं तज्जगदर्चनीयम्। शुभाशिषो यच्छतु बालकाय॥१॥

## परीक्षा।

१ प्रश्नाः। [ अ ] श्रीनेमिनाथः कस्य सुतः? कुत्र च तस्याधिवासः?

[ आ ] कृष्णहृदयः खलु कृष्णः कथम्? ( इ ) सती राजीमती का?

२ संशोध्यन्ताम्। [ क ] स भोजनादनु बहिरगच्छत्। [ ख ] भक्तिं देवो रोचते। [ ग ] इमां वार्तामहं वयस्यं कथयामि। [ घ ] इन्द्रः स्वर्गे अधिवसति।

३ [ अ ] समासा विगृह्यन्ताम् । द्रष्टुकामः, हर्षनिर्भरः, कृतसर्वपरित्यागः.

[ ब ] संधिः क्रियताम् । भ्रमन् + तदा, किङ्करः + असौ, तस्मिन्+उद्याने, ते + एते ।

---

पञ्चमः पाठः ।

## अतिलोभो विनाशाय ।

अस्ति कस्मिंश्चिदधिष्ठाने धर्मबन्धुर्नाम ब्राह्मणः । स कदाचिच्चैत्रमासे प्रयोजनवशाद्देशान्तरं प्रस्थितः । अथ यावत् कञ्चनाध्वानमतिक्रामति तावन्महानिबिडं श्वापदाकुलमरण्यं समासादितवान् । वने परिभ्रमतस्तस्य सम्मुखमेव धावन् करालाकृतिर्मूर्तिमान् कृतान्त इव कश्चन मत्तमातङ्गः समुपस्थितः । तं वारणं निरीक्ष्य भयेन विवर्णवदनो द्विजः ससंभ्रमं स्वप्राणरक्षार्थं सत्वरं जङ्घाबलमवालम्बत । मतङ्गजोऽपि तं विहन्तुं तत्पश्चाद् द्रुतमनुद्रुतः ।

अथ स्तोकमन्तरं पलाय्य कण्ठं विभुज्य च यावत्पश्चाच्चक्षुर्विकिरति तावदनतिदूरमनुधावन्तं तमेव दन्तिनमलक्षयत् । ततश्च ब्राह्मणः किंकर्तव्यतामूढोऽजायत । कथं कथंचन धैर्यमास्थायाशु तत्रत्यं शाल्मलिवृक्षमारोहत् । पल्लवव्यवहितः सन् शाखायां वेपमानोऽस्थितः । कुञ्जरोऽपि प्रदीप्तकोपः पादपं स्वशुण्डया परिवेष्ट्यामूलादुन्मूलयितुं प्रायतत । तदा भयविह्वलो विप्रोऽवतरितुमिच्छु-

विटपाद् व्यलम्बत। अधस्तात्तु यदा दृष्टिं प्राहिणोत्तदाशीविषसनाथो नरक इवातीवागाधः कूपस्तस्य दर्शनपथं यातः। अवलोक्य च तं तत्क्षणे विगलितधैर्यः स कामपि भयावस्थामनुभूतवान्। नैराश्यात्स्वजीवितनिरपेक्षस्य तस्य समुत्पन्नमेवं चेतसि। 'हा हा! कष्टम्। अहो मे मन्दभाग्यता। एकस्य दुःखस्य यावदन्तं गन्तुं न पारयामि तावद् द्वितीयं समुपतिष्ठते माम्। यदि स्कन्धादवतरामि तदा वापीवर्तिनो विषधरा हतभाग्यं मां दष्ट्वा यमालयं यापयेयुः। अथ नावतरामि तन्निःसंशयमुन्मूलिते तरौ मे प्राणहानिः। अथवापुण्यहतकेन मयात्रैव जीवितमुत्स्रष्टव्यमिति भगवत्या भवितव्यताया यदीच्छा तत्को वान्यच्छरणम्? इतो व्याघ्र इतस्तटीव मे दशा जाता। कोऽत्र मुक्त्युपायः? अद्य तु निश्चितं मृत्युना केशेषु गृहीतोऽस्म्यहम्। यद्भावि तद्भवतु"।

एवं कृतमतिर्धर्मबन्धुरात्मनो जीवितविषये नष्टाशो दैवायत्तोऽतिष्ठत्। तद्विटपोर्ध्वं शाखान्तरलग्नान्मधुकोशादेकैकमधुबिन्दुरधस्तात् प्रस्रवति स्म। अथ दैववशात् स मधुबिन्दुर्धर्मबन्धोर्मुखे पतितः। तस्य मधुररसास्वादेन मूढीभूतो द्विजन्मातिमहान्तमपि परिक्लेशं नागणयत्।

अत्रान्तरे विमानेन विहायसि विद्याधरदम्पती विहरतः स्म। विपद्ग्रस्तं विप्रं विलोक्य विद्याधरवनितोपजातदया वल्लभं व्याहरत्। "नाथ! खल्वयमध्वगो जीवितसंशये वर्तते। न शक्नोत्यात्मनात्मानं धारयितुम्। भवतासंरक्षितस्य तस्य सुतरामेव किञ्चिन्न

पश्यामि। तद्यावदेवायमसुभिर्न विमुच्येत तावदेवैनं कृच्छ्रान्मोचयित्वा तत्स्थानं नयतु भवान्" । इति । भार्यानुप्रेरितो विद्याधरोऽपि सानुकम्पं तत्समीपं विमानेन प्राप्याब्रवीत् ।

विद्याधरः--धर्मबन्धो ! मा बिभीहि । विमानेनाहं प्रापयामि त्वां यत्र तवासजनो वर्तते । शीघ्रमागम्यताम् ।

धर्मबन्धुः—सम्यगाह भवान् । इममेकं मधुबिन्दुमास्वाद्य त्वया सार्धमागच्छामि ।

विद्याधरः—भद्र ! मोहासक्तो मा भव । इतश्च गजेन्द्रेण तरुरपि प्रोन्मूलितः । अधस्ताद्धि व्यात्तमुखाः फणिनस्त्वत्पतनमुत्प्रेक्षमाणा इव स्थिताः । यां च शाखामवलम्बसे तां निशावासराविव भ्राजमानौ श्वेतकृष्णौ मूषकौ खण्डयतः । यदि व्यसनान्मुमुक्षुः सत्वरमाव्रज । सत्पथदर्शक इवाहं त्वां सत्पथं नयामि ।

धर्मबन्धुः--आर्यश्रेष्ठ ! प्रतीक्षस्व मुहूर्तमात्रम् । केवलमिमं पतन्तं मधुबिन्दुं रसयित्वागम्यत एव ।

विद्याधरः--मूढमते ! लौल्यं त्यज । अल्पसुखार्थं त्वं स्वजीवितं हातुमिच्छसि । मोहवशाज्जीवितापहं महदपि व्यसनमलमसि न ज्ञातुम् ।

धर्मबन्धुः—भद्र ! अधुनैकोऽवशिष्टो मधुबिन्दुः । तस्य रुचिं परिज्ञाय प्रस्थितोऽस्म्यहम् ।

धर्मबन्धुः--( सकष्टं पत्नीं प्रति । ) देवि ! मोह एवैनं न मुञ्चति । एहि । साधयावः । आशावशोऽयं पथिको व्यसनगत-

मात्मानं न विभावयति। अस्याल्पशेषं जीवितम्। वराकोऽयमचिराद्विपद्येत। ( इति सपत्नीको निष्क्रान्तः। )

( अचिरेण सा शाखा भग्ना। वृक्षः समूलमुद्धृतः। मधुलोलुपो धर्मबन्धुः कूपे पतितः फणिपतिभिश्च दष्टः प्राणैर्वियुक्तः। )

## परीक्षा।

१ प्रश्नाः [अ] किमर्थं धर्मबन्धुस्तरुमारूढः? [आ] धर्मबन्धुः किं दृष्ट्वा स्वजीवितनिरपेक्षोऽभवत्? (इ) केन कारणेन स विद्याधरेण सह न गतवान्? [ई] को विद्याधरः? को गजः? का च वापी?

२ [ अ ] उचितविभक्तयो योजनीयाः। मधुनि [ स्वादु ], रामाय [ महात्मन् ], पयसि [ श्वेत ].

[आ] व्युत्पत्तिं दर्शयत। यापयेयुः, पलाय्य, मुमुक्षुः, विपद्येत.

[ इ ] संधिः क्रियताम्। भीतः + खनकः, तरोः + शाखा, तस्मात् + जनपदात्, तदा + आगच्छति + अगस्त्यः, गिरी+इमौ.

३ [अ] समासा विगृह्यन्ताम्। प्रदीप्तकोपः, ससंभ्रमम्, देशान्तरम्, विवर्णवदनः.

[ ब ] वाक्ये समुपयुज्यन्ताम्। यावत्--तावत्, द्रुतम्, अलम्.

४ प्रयोगान्तरं विधीयताम्। (क) मोहासक्तो मा भव। (ख) त्वां सत्पथं नयामि। (ग) मयागम्यत एव।

५ संशोध्यन्ताम् ।

[१] अहमत्र तव प्रतीक्षामि ।

[२] सारथिररण्ये रथं नयति ।

[३] तरौ बालोऽधिरोहति ।

---

षष्ठः पाठः ।

## निशाकान्तः ।

सायंतमः समुद्भिद्य करैरिन्दोः समुद्यतः ।
सेनैवाग्रेसरी सन्ध्या स्फुरत्येषानुरागिणी ॥ १ ॥
पुरः प्रसारयन्नुच्चैः करानुद्याति चन्द्रमाः ।
प्राचीदिगङ्गनागर्भाद् द्युतिगर्भ इवार्भकः ॥ २ ॥
तमो विधूय दूरेण जगदानन्दिभिः करैः ।
उदेति स्म शशी लोकं क्षीरेण क्षालयन्निव ॥ ३ ॥
अखण्डमनुरागेण निजं मण्डलमुद्वहन् ।
सुराजेव कृतानन्दमुद्गतो विधुरुत्करः ॥ ४ ॥
विधूतध्वान्तमुद्यन्तं हिमांशुमुदयाचलात् ।
शातकुम्भमयं कुम्भमिवापश्यंस्तदा जनाः ॥ ५ ॥
लक्ष्यते पर्वतोत्सङ्गे विधुरारक्तमण्डलः ।
पुञ्जीकृत इवैकत्र सांध्यो रागः सुरेश्वरैः ॥ ६ ॥
दृष्ट्वेवाकृष्टहरिणं हरिं हरिणलाञ्छनम् ।
तिमिरौघोऽद्रवद्दूरं करियूथसदृङ्महान् ॥ ७ ॥

तारावलिवृतोऽराजज्ज्योत्स्नापूरः सुधाच्छवेः ।
सबुद्बुद इवाकाशसिन्धोरोघः परिक्षरन् ॥ ८ ॥
हंसपोत इवान्विष्यन्शर्शा तिमिरशैवलम् ।
तारासहचरीकान्तं व्यगाहत नभः सरः ॥ ९ ॥
तमो निःशेषमुद्धूय जगदाप्लावयन् करैः ।
रोहिणीरमणो विश्वं सुधामयमिवातनोत् ॥ १० ॥
अंधकारं विधूयापि विधुरासीत् कलंकवान् ।
निसर्गजं तमो नूनं महतापि सुदुस्त्यजम् ॥ ११ ॥
भिषजेव करैः स्पृष्टा दिशास्तिमिरभेदिभिः ।
शनैर्दृश इवालोकमातन्वञ्शिशिरत्विषा ॥ १२ ॥
दिगङ्गनामुखानीन्दुः संस्पृशन्नस्फुटैः करैः ।
स्प्रष्टुमिच्छत्यसौ नूनं प्रवसन् स्वप्रियाङ्गनाः ॥१३॥
तारातितिरियं व्योम्नि विरला लक्ष्यतेऽधुना ।
विप्रकीर्णेव हारश्रीर्यामिन्या गतिसंभ्रमात् ॥ १४ ॥
विभावरी विभात्येषा दधती बिम्बमैन्दवम् ।
जितं स्त्रीमुखकान्त्येव गलज्ज्योत्स्नापरिच्छदम्॥१५॥

महापुराणे ।

## परीक्षा ।

१ स्वमातृभाषायां निशाकान्तवर्णनं प्रदर्शयत ।

२ कतमः श्लोको भवच्चित्तहारी विद्यते ? सकारणं कथ्यताम् ।

## सप्तमः पाठः ।

# दानशीलस्य मेघरथस्य ।

आसीत्पुष्कलावतीषु पुण्डरीकिणी नाम नगरी । तस्या अधिपतिरपर इव धर्मपुत्रो दानशीलो मेघरथो नाम राजा । अथैकदा कार्तिकमासस्य शुक्लपक्षे मेघरथः स्वभक्तजनैः समं देवालये देवपूजां कुर्वन्नास्ते । तत्समये कश्चन भयपीडितः कपोतः पाहि राजन् ! पाहीति वदन्नकस्माच्चैत्यालयमागतवान् । भूपालं प्राप्य च श्येनाच्छरणं याचमानः पारावतस्तस्याङ्काश्रयं प्राप्नोत् । तदनु बलोद्धतः श्येनोऽपि तं हन्तुकामस्तत्रैव संप्राप्तः । तदवलोक्य सर्वेऽपि जना उपजातविस्मया आसन् । क्षितीशोऽपि बहुविस्मितो जातः । अनन्तरं शशादनो भूमिपालमभ्यधत्त ।

श्येनः—भो धर्मशील राजन् ! सत्त्वेषु सर्वदा समवृत्तिस्त्वम् । सर्वे भूपतयस्त्वां धर्मात्मानमाहुः । बुभुक्षितस्य भक्ष्यमिदं मे ब्रह्मणैव परिकल्पितम् । तत्कोऽधिकारस्ते मम भक्ष्यं मत्तः परिहर्तुम् ? मुञ्च ममामिषम् ।

राजा—श्येन ! त्वत्तस्त्राणार्थी संत्रस्तरूपः पारावतो मामासादितवान् । शरणागताय च तस्मै मयाभयं दत्तम् ।

श्येनः—हे दयाशील भूपते ! सर्वे प्राणिन आहारेण विवर्धन्ते । भोजनमुत्सृज्य न केनापि जीवितुं शक्यम् । यदि भक्ष्येण

विनाकृतोऽहं भवता तर्हि नूनमत्रैवाहं पञ्चत्वं गच्छेयम् । मयि चोपरते मदेकाश्रयाः पुत्रदारादयो विनाशं व्रजेयुः । भवानेकं कपोतं रक्षन् बहून् प्राणिनो हन्तुमभिलषति । तदुच्यताम्—




धर्मः को वा परो राजन् ! मान्यः पुण्यवतस्तव ।
अनेकप्राणिनां हिंसा कपोतप्राणरक्षणम् ? ॥ १ ॥

राजा—विहगोत्तम ! विवेकविश्रान्तं व्याहरासि । यतः शरणार्थिपरित्यागो न कदापि युक्तः । तवाहारो यत्र कुत्रापि सौकर्येण लभ्येत ।

श्येनः—हस्तप्राप्यमामिषं विहाय को वान्यप्रतिपत्तौ मतिं कुर्यात्? अत एव पार्थिव! वरमद्य कपोतः श्वो मयूरात्।

राजा—पक्षिन्! त्वं तु केवलं स्वार्थपक्षपातीति मे प्रतिभासि। सर्वे प्राणिन आत्मनः प्राणान् प्रियतरान् मन्यन्ते। न कोऽपि जीव आत्मानं व्यसने पातयितुं व्यवस्यति निजेच्छया। तस्मात्कपोतान्तक श्येन! विमर्शय बहुवारम्। भव परमकारुणिको महोदारश्च।

श्येनः—नृप! परोपदेशे पाण्डित्यं सर्वेषां सुकरम्। व्यसनगतस्यास्य कपोतस्य त्वं दयसे। क्षुत्क्षामकंठस्य मम वचनमपि कर्णे न करोषि। जीवनहेतुरयं मे जीवः। संश्रयार्थिपर्युत्सर्गोऽधर्मो मन्यते चेद्भिक्षादानरूपेण कपोतमिमं क्षुधार्ते मयि वितीर्य त्वया महाधर्मविदा भवितव्यम्। दानं हि परमं विभूषणम्। दानान्नान्यः श्रेयान् धर्मः। दानादेव नरः कीर्तिमान् भवति। तस्माद्दानपरो भव। अन्यथा दानशीलस्य मेघरथस्याग्रे बुभुक्षया श्येनो मृत इति संभृतकीर्तेस्तव परिवादस्य नवावतारो भवेत्। तस्माद्धेतोस्त्वमात्मानमधर्मात् कीर्तिविपर्ययाच्च रक्ष।

राजा—भो कपोतान्तक! त्वं तु महान् साधुरिव मामुपदिशसि। त्वयोपदिष्टं दानमपि मे मतम्। आगमे चतुर्विधं दानं प्रणीतम्। तेषु चाभयप्रदानं प्रधानं दानं वदन्तीह विद्वांसः। पुनश्च पात्रमपि त्रिविधं स्मृतम्। कनकमांसादिकमयोग्यं दानद्रव्यम्। अत्र विचार्यमाणे न त्वमुचितं पात्रं न वायं जीवो देयः। तदस्य

जीवदानेन तवैतादृशमनुचितं मनोरथं संपादयितुं सर्वथाक्षमोऽयं मेघरथो राजा। धर्मकृत्यविधाने कृतनिश्चयमात्मानमकुतोभयं मन्ये।

एतेन महीपतिर्युक्तिवादेन शशादनस्योत्तरावकाशमप्यहरत्। तस्य हृदयमनुकम्पया द्रवीभूतम्। पश्चात्तापेन सोऽतीवादह्यत। अनन्तरमसौ बाष्पगद्गदमन्तिकमुपेत्य राज्ञश्चरणौ प्रणतवान्। अतः-परं नाहं मांसं सेविष्य इति सङ्कल्पमङ्गीकृतवान्। कालक्रमेण शशादनोऽसूनुत्सृज्य स्वर्गलोकं गतः।

## परीक्षा।

१ प्रश्नाः। [अ] पुष्कलावतीषु कः कीदृशश्च राजा? [आ] देवालये राजानं प्रति कः किमर्थं चागतः? [इ] किमुद्दिश्य श्येन-स्तत्र संप्राप्तः? [ई] भूपालेन केन प्रकारेण पारावतः संरक्षितः? [उ] अन्ते श्येनेन किं प्रतिज्ञातम्?

२ (क) वाक्ये समुपयुज्यन्ताम्! अन्यथा, सुष्ठु, वरम्. [ख] संधिः क्रियताम्। अचलत् + हरिः, धनुः + तनोति, उड्डीयमानः + शलभः.

३ प्रयोगान्तरं विधीयताम्।

[क] भोजनमुत्सृज्य न केनापि जीवितुं शक्यम्।

[ख] त्वया महाधर्मविदा भवितव्यम्।

[ग] न त्वमुचितं पात्रं न कायं जीवो देयः।



[व] पश्चात्तापेन सोऽतीवादह्यत।

४ [अ] समासा विगृह्यन्ताम्। हन्तुकामः, विनाकृतः, मदेकाश्रयाः, अकुतोभयम्.

[आ] व्युत्पत्तिं दर्शयत। पातयितुं, मतम्, संविध्ये.

५ [अ] संशोध्यन्ताम्।

(प) हिरण्यकश्चित्रग्रीवस्य प्राणा आसन्।

(फ) धनिनं द्रव्यं याचितं भिक्षुकैः।

(व) वरं भिक्षा याचितुं न तु परसेवाविधिम्।

[ब] वाक्यविच्छेदः संपूर्यताम्। [१] किं न दयसे———। [२] वितरति गुरुः— विद्यां यथैव तथा — । [३] अहं शतं रूपकान् —— यच्छामि।

---

## अष्टमः पाठः।

# मृगयानिवृत्तस्य गंधर्वराजस्य।

गंधर्वनगर्यां महाप्रतापशाली राजा गंधर्वो नाम। तस्य बाल्यात्प्रभृति मृगयायां गाढाभिनिवेश आसीत। अथैकदा प्रत्यूषे परिमितैः पार्श्वचरैरनुयातो राजा गंधर्वो मृगयां कर्तुं वनमव्रजत्। तत्र स वनवराहान्, केसरिणः, शार्दूलांश्च सहस्रशोऽहन्। अन्ये च जीवन्त एव महाप्राणतया तेन स्फुरन्तो गृहीताः। अथ समारूढे

च युगान्तरं सवितरि स श्रमापनयनाय तरुच्छायमाश्रितः। तत्र स कियत्कालं विश्रम्य गंधर्वराजो गंधर्वमारुह्य नगराभिमुखं प्रचलति यावत्तावत् पर्वतादवतीर्णं नयनमनोहरं कर्बुरितगात्रं कृष्ण-सारमपश्यत्। तस्य दर्शनेनाकृष्टचेतास्तं जीवग्राहं ग्रहीतुकामः सपरिजनः शनैः शनैरुपसर्पिततुरगस्तत्समीपमपासर्पत्। मनुजदर्शनत्रासात्तु स मृगो दूरं पलायत। अत्र गृह्यतेऽयं गृहीत इति तं पलायमानं हरिणं दूरमन्वसरद्राजा। प्रथमत एव भृशं परिक्रान्तो वाहो न तथा त्वरयाद्रवत्। महाजवतया स मृगस्तु विप्रकृष्टान्तरः संवृत्तः। ततश्चायं प्रयत्नप्रेक्षणीयो मे दुरासदो भवेदिति नृपालस्तं हरिणं शरव्यमकरोत्।

अत्रान्तरे क्वापि गुल्मान्तरे सुखासीना मृगसहचरी पलायमाने कृष्णसारेऽधिज्यकार्मुके राज्ञि चाकस्माच्चक्षुरयच्छत्। ततः स्वकीयस्य सहचरस्य जीवितमिच्छन्ती सा मृगी तरसा बाणपथवर्तिनः कृष्ण-सारस्यान्तरे समुपस्थिता। तदा नरपतेर्निशातनिपातः शरो मृदुनि मृगीशरीरेऽपतत्। सायकेनाभिहता सा सपद्येवातिलोलं स्वजीवित-मजहात्। तथा व्यापादितां निजसहचरीं दृष्ट्वाऽत्यन्तसंभ्रान्तः सार-ङ्गस्तु शरपतनभयात्तथा वायुरंहसाधावद्यथा विद्रवतस्तस्य धराप्य-परिमितेवाभवत्। इतश्च चलेऽपि लक्ष्येऽनपराद्धेनेषुणा नरपालस्य हर्षोऽतिभूमिं गतः। तदनु तां मृतां मृगीं स्वानुगस्य स्कन्धे कार-यित्वा सत्वरं स्वपुराभिमुखः प्रातिष्ठत।

अथ तस्य गच्छतो मार्गे स एव प्रपलायमानः सारङ्गः सम्मुखं

संप्राप्तः। तस्य विरहकातरां दीनां च मनोवृत्तिं प्रेक्ष्य क्षितिपस्तापादन्तःशल्य इवासीत्। आसीच्चास्य मनसि। " अहो! ममेदं मूर्खत्वम्। मृगयालोभेन मया मूर्खेण निरागो मृगमिथुनं नितान्तमुत्संकलितम्। खलं हि खलु मे हृदयम्। यो हि ममामार्गणेन कातरीभूत आत्मरक्षार्थमतिरभसा पलायत, स एवायं



निर्भयं त्यक्तजीविताशो दयितानुरागित्वात्तस्याः पदवीमद्यापि न विजहाति। अहो गुर्वपि विप्रयोगदुःखमारोपितोऽयं वराकः। मृगयाया बहुदोषतायैव मयाधिगता। धिगिदं मृगयाव्यसनम् "। इति मुहुर्मुहुः स्वनिन्दां कुर्वाणः सशोकः कथं कथमपि निजनगरीं निवृत्तः। ततः प्रभृति तस्य चेतो मृगयाविरक्तं संवृत्तम्। अनुदिनं नरपतिः सहचरीविश्लेषितस्य हरिणस्य भूयो भूयः स्मृत्वा

विप्रतीसारवृत्तिरभवत् । अनन्तरं राज्यधुरं स्वसुते विन्यस्य तपसे वनमगच्छत् ।

## परीक्षा ।

१ प्रश्नाः । ( १ ) राजा गंधर्वः कीदृश आसीत् ? ( २ ) कीदृशं च कृष्णसारं कथमपश्यत् ? ( ३ ) अनन्तरं तेन किं कृतम् ? ( ४ ) मृगसहचरी किमर्थमम्रियत ? राजा किमर्थं विप्रतीसारवृत्तिरभवत् ?

२ ( अ ) समासा विगृह्यन्ताम् । तरुच्छायम्, अधिज्यकार्मुके, बाणपथवर्तिनः, निर्भयम्.

( आ ) संधिः क्रियताम् । मधु + एतद्, तस्याः + तनयः, अवदत् + चतुराननः.

३ ( क ) कानि रूपाणि सन्ति ? मृदूनि, राज्ञि, निवृत्तः, अजहात्, तपसे.

( ख ) वाक्ये समुपयुज्यन्ताम् । धिक्, चक्षुर्दा, रभस्.

४ प्रयोगान्तरं विधीयताम् । [ अ ] मया मूर्खेण निरागो मृगमिथुनं विरहितम् । [ आ ] स केसरिणोऽहन् [ इ ] स तस्याः पदवीमद्यापि न विजहाति ।

५ संशोध्यन्ताम् । [ क ] अस्माभिर्वातं स शत्रुभिर्हतः । ( ख ) पथिक उत्थिते सति तस्य सार्धमागच्छामि [ ग ] तव च मे च सख्यमस्ति ।

## नवमः पाठः ।

# काञ्चनमयः पुरुषः ।

अस्ति कस्मिंश्चनाधिष्ठाने महान् दरिद्री वरदत्तो नाम ब्राह्मणः प्रतिवसति स्म । तस्य निष्करुणा नाम्नी भार्या सप्त च पुत्रा आसन् । एकदा दारिद्र्याभिहतो विप्रः सकष्टं पत्नीमभाषत । 'हे प्रिये ! यत्सत्यमकिञ्चनत्वं तु निजगेहे चिरस्थायीति प्रतिभाति । पुनश्च न पश्यामि खल्वहं कोऽप्यत्र स्वोदरभरणोपायः । तद्यत्र वयं सुखिनो निश्चिन्ता भवामस्तत्रैवावस्थातुं पक्षपाति मे हृदयम् । यतः साश्चिदमुक्तम् ।

'स देशः प्रवरो यत्र कुटुम्बभरणं भवेत्' ।

इत्युक्ता सा विप्रा विमृश्यावदत् । "नाथ ! यदेव भवते रोचते तदेवानुमतं नः" । इति । तदनु स द्विजः सकुटुम्बो देशान्तरं गन्तुं प्रवृत्तः । कतिपयैः प्रयाणैर्वरदत्तो वरशक्तिनाम्नीं नगरीमविन्दत ।

अथातिक्रान्ते च कस्मिंश्चन काले तत्रत्यो भूपतिः सुधर्मः स्वशत्रुं निर्जित्य निजनगरीं न्यवर्तत । नगरीं प्रविशति यावत्तावत्तस्याः प्रतोली सहसापतत् । तां लोकित्वा च नृपतिरहोऽनिमित्तं जातमनिमित्तं जातमिति मनसि कुर्वाणो रणरणकमारूढः । तदा मंत्रिणा द्विर्वा कारितापि सा प्रतोली न स्थिरासीत् । ततो नर-

पतिश्चिन्ताकुलो मंत्रिणमनुयुक्तवान् । " भो मंत्रिन् ! प्रतोलीपतनमशुभं सूचयति । यदि सा झटिति स्थिरा न कारिता तर्हि कोऽपि रन्ध्रान्वेषी सुलभलब्धप्रवेशोऽरातिरस्मानभिगच्छेत् । एवं चास्मद्राज्यं सर्वेषां द्विषामामिषतां यायात् । तद्यं कमप्युपायं शीघ्रं चिन्तयतु भवान् येन प्रतोलीनिर्माणकर्म साधयामः" । इति । मंत्री ब्रूते । 'देव ! स्वहस्तेन मनुष्यं बालकं वा मारयित्वा तद्रक्तेन प्रतोली सेचनीया । एवं कृते प्रतोली स्थिरा स्यात् । नान्यथा '। इति ।

एतद्वचनं निशम्य राजा दोलायमानेन चेतसा चिन्तामविशत् । अचिन्तयच्चैवं मनसि । " अहो ! यस्मिन्नगरे जीवहिंसा विधीयते तेन नगरेण किं प्रयोजनम् ? स्वार्थपरेणापि नरेण न कदापि हिंसा कर्तव्या । तदलमेतादृशेन दुर्मनोऽभिनिवेशेन । उक्तं च ।

**न कर्तव्या स्वयं हिंसा प्रवृत्तां च निवारयेत् ।**
**जीवितं बलमारोग्यं शश्वद्वाञ्छन्महीपतिः " ॥ १ ॥**

एवं विचिन्त्य नृपतिनात्मनः सर्वमप्यभिप्रेतं मंत्रिणे निवेदितम् । मंत्री प्रत्यभाषत । " स्वामिन् ! मैवं चिन्तयतु भवान् । मया देशहितार्थं सर्वमपि सुष्ठु क्रियते । भवांस्तूष्णीं तिष्ठतु " । इति । ततो मंत्रिणा द्रव्यस्योद्ग्राहणिकां कृत्वा तेन द्रव्येण काञ्चनमयः पुरुषो घटापितः । विविधरत्नैर्भूषयित्वा शकटे च तं समारोप्य नगरमध्ये घोषणमेवं दापितम् ।

"यः कोऽपि पुत्रकं दद्यात् प्रतोलीबलिकर्मणे ।
सुवर्णपुरुषस्तस्मै कोटिवित्तं च दीयते" ॥ २ ॥

एतद्घोषणं सहसा दरिद्रेण वरदत्तेनाकर्णितम् । विश्रुत्य च सुवर्णलुब्धः स निजभार्यामगदत् । "अयि प्रिये ! कनिष्ठपुत्रमिन्द्रदत्तनामानं दत्वेदं द्रव्यं गृह्यते । आवयोः कुशले सत्यन्येऽपि बहवः पुत्रा भविष्यन्ति । तदनुजानीहि मां पुत्रप्रतिपादनाय" । इति । असौ निष्करुणापि नाथ ! यदि भवतोऽनुमतं तद्दीयतां को दोष इत्यवदत् । तदनु वरदत्तेन कोटिद्रव्यं सुवर्णपुरुषं च गृहीत्वा राजकिङ्कराय स्वपुत्र इन्द्रदत्तः समर्पितः ।



ततः सालङ्कारं लोकसमूहवेष्टितं हसमानं प्रतोलीसम्मुखमागतमिन्द्रदत्तं दृष्ट्वा राज्ञाभिहितम् । "अरे रे बालक ! किमर्थं

हससि ? मरणान्न बिभेषि किम् ? " इति । तदेन्द्रदत्तेनोदितम् । " देव ! यावद्भयं नागच्छति तावद्भेतव्यम् । आगतं तु भयं वीक्ष्य प्रहर्तव्यमशङ्कितम् । पुनश्च महाराज !

**पितृभ्यामात्मजो दत्तो राजा च शस्त्रघातकः ।**
**देवता बलिमिच्छन्ति का तत्र परिदेवना ? ॥ ३ ॥**

अत एव धीरत्वेन मरणमस्तु " । इति वचनं कर्णे कृत्वा राजा वाचंयमोऽभवत् । एवं बालकसाहसं वीक्ष्याकस्मात्तत्र नगरदेवताः प्रकटीभूताः । परमप्रीताभिस्ताभिः सा प्रतोली झटित्येव विनिर्मिता । ततश्च सर्वे विस्मिताः पौरास्तमेव वृत्तान्तमुच्चारयन्तः स्वस्थानमगच्छन् । राजापि परमसन्तुष्टस्तमिन्द्रदत्तं पारितोषिकैः पुरस्कृत्य तज्जनकायत्तमकरोत् ।

## परीक्षा ।

१ प्रश्नाः । ( अ ) किमर्थं वरदत्तेन स्वपुत्रो राजसेवकाय समर्पितः ?

[ आ ] कथं च प्रतोली विनिर्मिता ?

[ इ ] अस्य पाठस्य किं तात्पर्यम् ?

२ [ अ ] व्युत्पत्तिं दर्शयत । सेचनीया, मारयित्वा, समर्पितः, यायात्.

[ ब ] समासा विगृह्यन्ताम् । रन्ध्रान्वेषी, अशङ्कितम्, प्रतोलीसम्मुखम.

३ संशोध्यन्ताम् । [१] गुरुः पुत्राय स्निह्यति ।
[२] यदि स त्वया पाठं नाध्यायति, तर्हि मां तस्मिन्निवेदय ।
[३] राज्ञापराधीनं शता रूपका दण्ड्याः ।

४ प्रयोगान्तरं विधीयताम् । [क] मया देशहितार्थं सर्वमपि सुष्ठु क्रियते ( ख ) अनुजानीहि मां पुत्रप्रतिपादनाय । ( ग ) भवांस्तूष्णीं तिष्ठतु ।

---

## दशमः पाठः ।

# मुहूर्तराजः ।

कुरुजाङ्गलदेशेषु हस्तिनागपुरं परम् ।
तत्रासीत्पद्मनाभाख्यो धर्मशीलो नृपोत्तमः ॥१॥
अथैकस्मिन्दिने कोऽपि सभां राज्ञः समागतः ।
बालिर्नाम महाविद्वान्विक्रान्तो भूसुरोत्तमः ॥२॥
तस्य विद्याप्रभावेण सन्तुष्टः पार्थिवोऽपि सः ।
सर्वाधिकारिकं स्थानं ददाति स्म द्विजन्मने ॥ ३ ॥
संभावनाप्रसादेन बहु प्रीतो बालिद्विजः ।
वर्णाश्रमाणामवने जागरूके महीपतौ ॥ ४ ॥
कदाचित्सिंहविक्रान्तश्चतुरङ्गबलान्वितः ।
सिंहकीर्तिरवस्कन्द्य हस्तिनागपुरं स्थितः ॥ ५ ॥

सेनापतित्वमादाय ततः कदनकोविदः ।
अरुन्द्ध सबलो मंत्री बलिर्बहुरुषं द्विषम् ॥ ६ ॥
विपक्षो बलिना संख्ये विनिष्पिष्यारिसैनिकान् ।
जीवग्राहं गृहीत्वासौ नृपाय प्राभृतीकृतः ॥ ७ ॥
तस्य वीर्यप्रकर्षेण हृष्टः पद्मनराधिपः ।
अभाषताभिनन्द्यैवं बलिं विजयशालिनम् ॥८॥
" साधु, मंत्रिन् ! महाशूर ! त्वमेव नरकेसरी ।
असह्योऽरिगजस्य त्वं पञ्चाननपराक्रमः ॥ ९ ॥
त्वयाद्यो हृदयस्थं मे शल्यमुन्मूलितं खलु ।
तुष्टोऽस्मि तव शौर्येण याच्यतामीप्सितो वरः"॥१०॥
" प्रार्थयेऽहं यदा देवः प्रसादीकर्तुमर्हति " ।
इत्युक्त्वा नृपतेश्चित्तं बद्धमात्मनि मंत्रिणा ॥ ११ ॥

  

अथ यातेषु कालेषु कदाचिन्मुक्तिकामुकः ।
आयातोऽकम्पनाचार्यः सशिष्यस्तां पुरीं सुधीः॥१२॥
बलिर्जातो मुनिं दृष्ट्वा सोत्सेकं बद्धमत्सरः ।
निसर्गतो हि दुष्टानां परोत्कर्षासहिष्णु हृद् ॥१३॥
पुरात्ममानभङ्गस्य वैरनिर्यातनं तदा ।
कर्तुं नृपवरव्याजात्स संकल्पमकल्पयत् ॥ १४ ॥

अतिदुष्टमतिर्मंत्री महीकान्तमयाचत ।
आत्मैकशासनप्राज्यं राज्यमष्टादिनावधि ॥ १५ ॥
रजोरिक्तमना राजा संश्रुतं तं वरं पुरा ।
अमात्याय वितीर्यासीत्सज्जनः सत्यसङ्गरः ॥ १६ ॥
प्राप्तराज्याधिकारोऽसौ मंत्री मखमिषेण च ।
मुनिवृन्दविनाशाय यज्ञस्यारम्भमातनोत् ॥ १७ ॥

  

अथ विष्णुमुनिः कोऽपि संप्राप्तो हास्तिनं पुरम् ।
धर्मसंरक्षणार्थैव प्रवृत्तिर्हि महामुनेः ॥ १८ ॥
प्रविश्यान्तःपुरं भूपं व्याहरन्मुनिसत्तमः ।
"नाथे त्वय्युपसर्गोऽयं मुनीनां महतां कथम् ?॥१९॥
राजन् ! संयतलोकस्य भूतलेऽस्मिस्तपस्यतः ।
गोपायिता परः को वा प्रायेणास्ति नरेश्वरात् ?"॥२०॥
एवमुक्तोऽब्रवीद्भूपः कतिचिद्दिवसान् बलिः ।
राजाहं शब्दमात्रेण क्षमस्व भगवन्निति ॥ २१ ॥
ततो विष्णुमुनिः साधुत्राणार्थं वामनाकृतिः ।
वेदवाक्यं पठन्नुच्चैः स्वयं सत्रमुपस्थितः ॥ २२ ॥
वेदवाक्यसरप्रीतः सचिवः पृष्टवान् मुनिम् ।
"प्राधीषे त्वं निधायार्य ! किमिष्टं वस्तु चेतसि ?॥२३

वदान्यानां प्रसिद्धोऽहं मत्कीर्तिः प्रथितावनौ ।
मत्सकाशादलब्धार्थी कामं नान्यत्र गच्छति" ॥२४
"यावतीं त्रिपदेनाहं व्याप्नुयां तावतीं महीम् ।
दातुमर्हसि मे भूप ! वदान्यो यदि विद्यसे" ॥२५॥
इति विष्णुकुमारेण प्रार्थितो बलिरप्यसौ ।
पादत्रयप्रमाणां तां तस्मै प्रत्यश्रृणोद्भुवम् ॥ २६ ॥



"जलधारोत्तरार्थं भोः साधो ! हस्तः प्रसार्यताम्" ।
बलिर्विष्णुमुनेर्हस्ते दानवारि न्यपातयत् ॥ २७ ॥
प्रतिश्रुतस्तेन तदा मुनीश-
स्तपःप्रभावेण बृहच्छरीरः ।
एकं क्रमं वारिनिधौ न्यधत्त
परं महोत्तुङ्गगिरेश्च सानौ ॥ २८ ॥

तृतीयपादाय नरेश ! भूमिः
मदीयतामित्थमसौ ब्रुवाणः ।
कृत्वा ततोऽङ्घ्रिं बलिपृष्ठदेशे
मावेशयच्चाशु रसातलं तम् ॥ २९ ॥

## परीक्षा ।

१ प्रश्नाः। ( क ) कोऽयं बलिः? । [ ख ] भूपवरेण तस्मै वरः किमर्थं च प्रतिश्रुतः ? [ ग ] बलिर्मुनिं दृष्ट्वा बद्धमत्सरः किमर्थमासीत्? ततो बलिना किं कृतम्? ( घ ) विष्णुमुनिः राजानमन्तःपुरं प्रविश्य किमवदत्? राज्ञः प्रत्युत्तरं किम्? ( ङ ) ब्राह्मणवेषधारिणा विष्णुकुमारेण बलिः किमयाच्यत? ततः किं जातम्?

२ [ क ] व्युत्पत्तिं दर्शयत । अवरुद्ध, अरुन्द्ध, तपस्यतः.

[ ख ] समासा विगृह्यन्ताम् । भूसुरोत्तमः, चतुरङ्गबलान्वितः, कदनकोविदः, पादत्रयप्रमाणाम्.

३ संशोध्यन्ताम् । ( क ) इयं नगरी त्रयः क्रोशा आयता।

( ख ) काञ्चीनाम नगर्यां धनमित्रनाम वणिगवसत् ।

( ग ) स एवं विचारयन् सकला रात्रिरगम्यत् ।

४ ( क ) विश्लेषः क्रियताम् । तांश्चौरान् रामोऽस्त्ययम् वस्तुष्विच्छा.

( ख ) वाक्यविच्छेदः संपूर्यताम् । (१) दशरथिः — अभयं प्रत्यश्रृणोत् । (२) गोविंदः — द्रुह्यति । [३] मागधी — स्पृहावती ।

( ग ) उचितविभक्तयो योजनीयाः । [ पूर्व ] दिने, [ सर्व ] जनाः, [ अन्यत् ] फलाय, [ भगवत् ] जिनेन्द्रस्य.

---

## एकादशः पाठः ।

# भ्रातृस्नेहं राज्यलोभोऽतिवर्तते ।

आसीत्पुरा किल भारते वर्षे भरतनामा कोऽपि महाद्युतिर्वीर्यशाली चक्रवर्ती । तेनात्मनो बाह्वोर्बलेन प्राची पश्चिमा दक्षिणोत्तरा चेति सर्वा दिशोऽनुक्रमेण वशीकृताः । अचिरेणैव कालेन सकलमेव महीमण्डलमशेषद्वीपान्तरं चात्मीकृत्य साकेताभिमुखः प्रयाणमकरोत् । कतिपयैः प्रयाणैश्चक्री स्वराजधानीमयोध्यां प्राप्तः । प्रवेशसमये चक्रिणः सुदर्शनं चक्रं पुरद्वारं न प्राविशत् । बहिःस्थितं चक्रमम्बरमणेर्बिम्बमिवाम्बरात्परिलम्बते स्म । ततो विस्मयमापन्नो भरतेशो मनस्येवमकरोत् । " अप्रतिशासने मयि किं नामैतच्चक्रं मम गृहाङ्गणेऽद्य स्खलितम् ? अहो महदाश्चर्यमेतद्यद्विश्वदिग्विजयेऽपि न क्वापि स्खलितवृत्त्यासीत् । यत्सत्यं केनापि विरुद्धेन शत्रुणा भवितव्यम् " ।

एवं विचार्य भरतेश्वरेण तत्कारणमन्वेष्टुमनेकनीतिशास्त्रपारगः पृष्टः पुरोहितः सुचिरं विमृश्याभ्यधत्त । " देव ! भवताद्य यावत्

किल निखिलमपि बहिर्मण्डलं परिक्रान्तम् । अन्तर्मण्डलमद्यापि प्रतिकूलमेव वर्तते । अमी एकोनशतं सोदर्या भवतोऽद्याप्यजय्याः खलु । तेषु च श्रीबाहुबली महान् बलवान् मानशाली च विद्यते । तस्मिञ्जिते शेषा जिता एव । प्रभो ! सावशेषे दिशां विजये चक्रस्य विश्रान्तिः कुतः ? " इति पुरोधसो वचनमाकर्ण्य विश्वस्यैकातपत्रं प्रभुत्वं भोक्तुकामो भरतेश्वरः कञ्चन दूतं श्रीबाहुबलिने विसृष्टवान् । शासनहरेणापि पोदनपुरमागत्य प्रभोः संदेशमन्तरेण श्रीबाहुबली परिगृहीतार्थः कृतः । तेन संदेशेन स्वातंत्र्यमपहर्तुमुद्युक्ताय भरतेश्वराय भुजबली भृशमकुप्यत् । खदिराङ्गाररक्तेन भ्रकुटिविकरालेन चक्षुषा निरीक्ष्याब्रवीत् । "दूत ! मद्वचनात्स भूपो वाच्यो यथायं जनः पराधीनं जीवितं न कदाचनापि धारयेत् । परमपूज्येन गुरुणास्मासु सर्वेषु महीयं समं विभक्ता । अस्मद्राज्यस्य भरतराजः कर्हिचिदपि न प्रभवति । तथापि—

युयुत्सुश्चेद्भवत्स्वामी स वा भुङ्क्तां महीतलम् ।
चिरमेकातपत्राङ्कमहं वा भुजविक्रमी ॥ १ ॥

संग्रामनिकषे मम वा तस्य वा पौरुषस्याभिव्यक्तिर्भवतु " । इति संभाष्याविष्कृतमानो भुजबली भरतं युद्धाय सन्नाहयितुं वचोहरं शीघ्रं संप्रेषितवान् ।

अनन्तरं निसृष्टार्थमुखाद्विदितप्रतिसंदेशो नृपशार्दूलो भरतोऽपि युद्धार्थं समरभूमिं प्रस्थितः । भुजबली नृपतिश्च ससैन्यः

संग्रामयितुमागतः। उभयबले वीराः प्रयुयुत्सयान्योन्यं बलान्या-रचयन्। तावन्मुख्या मेधाविनो मंत्रिणः संप्रधार्यैवमवदन्। "अहो! किमनेन संग्रामेण प्रयोजनम्? चरमाङ्गधरौ द्वावपि विद्येते। नानयोः काचन क्षतिः। केवलमनेन रणव्याजेन पक्ष्यस्य जनस्य महान् क्षयो विजृम्भितः। तस्मादसंख्यजनसंहारकारिणाकारणे-नानेन रणेनालम्" । इति ।

एवं सुनिपुणं निश्चित्योभयसैन्येऽपि मंत्रज्ञा जनक्षयाद्भीत्वा तयोरनुमतिं लब्ध्वा धर्म्यं रणमघोषयन्। अन्ते च तयोरेव मिथो जलयुद्धं, दृष्टियुद्धं, मल्लयुद्धं च निश्चितम्। योऽनयोरेतेषु जयमाप्स्यति स विजयी। ततः प्रथमं निर्निमेषं दृष्टियुद्धं प्रवृत्तम्। भुजबली महोत्तुङ्गो भरतश्च वामनः। दृष्टियुद्धे सततमूर्ध्वं विलोकयतो भरतस्य नेत्राभ्यां रविकरैः पक्ष्मपातादश्रूणि पतितानि। ततो बाहुबलिना तस्मिन् युद्धे जयोऽवाप्यत। पश्चाज्जलयुद्धमारब्धम्। सरसीजलमवतीर्णौ तौ दीर्घतरैर्भुजैः परस्परस्योपरि जलं क्षेप्तुं प्रारभे-ताम्। भरतराजेन मुक्तो जलौघस्तुङ्गकायस्य बाहुबलिनोऽधिवक्षस्त-टमापतत्। बाहुबलिना क्षिप्ता सलिलच्छटा भरतेश्वरस्य मुखस्योपरि पतन्ति स्म। एवमत्रापि भुजबलीशस्य विजयो भूयोऽप्युद्घोषितः।

अथान्ततश्च बाहुयुद्धार्थं नृसिंहौ तौ रङ्गमवतीर्णौ। तत्रापि भुजबली निजसामर्थ्येन जितभारतं भरतं हेलयाजयत्। इत्थं त्रिविधेऽपि युद्धे पराभूतो भरतराजः परां विमानतां प्राप्य विलक्षतामुपगतः। अनेन पराजयेन चक्री क्रोधेन बद्धभ्रुकुटिर्मनस्यतीव प्रज्वलितः।

भुजबलीशस्य पुनरप्यपजयं कर्तुं भरतेन निजभ्रातरि चक्रायुधं प्रेरितम्। परं भुजबलीशं त्रिःप्रदिक्षणं कृत्वा तत्समीपे मन्दद्युत्येवातिष्ठत्। तेन भरतेशः पुनरपि परमनुशयं गतः। तदनु विजयशालिनः श्रीबाहुबलिनो राज्यं प्रति निःस्पृहश्चक्रधरः स्वकृतिं विगर्हयन् साकेतपुरं प्राविशत्।

## परीक्षा।

प्रश्नाः। [ १ ] किमर्थं भरतेशस्य चक्रं पुरद्वारे स्खलितम्? [ क ] भुजबलीशेन भरतेश्वराय कः प्रतिसंदेशः प्रेषितः? [ ब ] किं त्रिधात्मकं युद्धम्? तस्मिन् को विजयी जातः? कथं च?

२ ( अ ) व्युत्पत्तिं दर्शयत। विगर्हयन्, संप्रधार्य, भुङ्क्ताम.

( आ ) वाक्ये समुपयुज्यन्ताम्। हेलया, मिथः, प्र+भू, किं नाम.

( इ ) संधिः क्रियताम्। अमी + अरयः, भगवान् + जिनेन्द्रः, दिनानि + अमूनि, एषः + फणिपतिः.

३ समासा विगृह्यन्ताम्। अविवक्षस्तटम्, सोदर्याः, बद्धभ्रुकुटिः.

४ प्रयोगान्तरं विधीयताम्। (अ) मद्वचनात् स भूपो वाच्यः। (ब) केनापि विरुद्धेन शत्रुणा भवितव्यम्। (क) तेन भरतेशः परमनुशयं गतः। (ड) भुजबलीशेन जयोऽवाप्यत।

५ (अ) संशोध्यन्ताम् ।

[क] अस्य पुस्तकस्य रामाय प्रयोजनं नास्ति ।

[ख] तस्याहं दूतं प्रहितवान्, किन्तु पाटली–
पुत्राय न कोऽप्यद्यापि विसृष्टः ।

[ग] गोपालो नाम वयस्येन सहागच्छम् !

[घ] राज्यस्योपरि चण्डवर्मा प्रशास्ति ।

(ब) वाक्यविच्छेदः पूर्यताम् । [च] हरिः —— कुप्यति ।

[छ] भवतः —— अन्तरेण परिगृहीतार्थ कृता देवी ।

[ज] रामः —— बाणं मुञ्चति ।

---

## द्वादशः पाठः ।



[ कठोरगर्भा राज्ञीं मरुदेवीं देवाङ्गना एतान् प्रश्नान् पृच्छन्ति ]

को हि पञ्जरमध्यास्ते ?
को वा परुषनिस्वनः ? ।
तथा प्रतिष्ठा जीवानां ?
कश्च पाठ्योऽक्षरच्युतः ? ॥ १ ॥
के सन्ति मधुराराबाः ?
के तथा हरिकन्धरे ? ।

सदा केनोह्यते गन्धः ?
तथा केनाखिलार्थदक् ? ॥ २ ॥
कोऽस्ति वा मञ्जुलालापः ?
कश्च वा विटपी जरन् ? ।
कः प्रायो नृपतिर्वर्ज्यः ?
बहु को विदुषां मतः ? ॥ ३ ॥
का कला स्वरभेदेषु ?
का मता रुचिहा रुजा ? ।
का वधू रमयेत्कान्तं ?
का हता तारनिस्वना ? ॥ ४ ॥
वराशनेषु को रुच्यः ?
को गम्भीरो जलाशयः ? ।
कोऽस्ति वा वसुधाकान्तः ?
लोलुपो मधुनश्च कः ? ॥ ५ ॥
कः समुत्सृज्यते धान्ये ?
घटयत्यम्ब ! को घटम् ? ।
मूषकानत्ति कः पापी ?
कस्यास्ति लवणं जलम् ? ॥ ६ ॥
जले पिबति को वारि ?
गगने प्रतिभाति कः ? ।
कः कीदृग् न नृपैर्दण्ड्यो ?
नृणां भीतिः कुतोऽस्ति वा ? ॥ ७ ॥

संबोध्यसे कथं देवि ! ?
किमस्त्यस्ति क्रियापदम् ?
शोभा च कीदृशे व्योम्नि ? ।
भवतोदं निगद्यताम् ॥ ८ ॥

महापुराणे ।

## परीक्षा ।

१ किंनामधेयोऽयं पाठो भवद्भिः कल्प्येत ?

२ कानि रूपाणि ? हता, रुचिहा, समुत्सृज्यते, रुजा.

३ अधस्तनशब्दाः श्लोकेषु यथायोग्यं योजनीयाः ।

मत्स्यः, अनपराधी, कुलालः, रविः, मधुपः, कोविदः, केशराः, शुकः, केतकः, श्लोकः, काकः, कोटरी, कोकिन्, लोकः, पलालः, भूपः, कोकिलः, कामिनी, कामला, सूपः, कोपनः, केवलम्, कूपः, युद्धतः, बिडालः, काहला, काकली उदधिः, भवति.

---

## त्रयोदशः पाठः ।

## प्रणामान्तः सतां कोपः ।

पुरा किल विश्वभूतिर्नाम कोऽपि विख्यातो भूपो मगधान् प्रशास्ति स्म । तस्य जयिनी नाम्नातीव लावण्यवती जायासीत् ।

तयोर्विश्वकलासु कुशलो विश्वनन्दीनामा महान् गुणवान् विनयशाली पुत्रो जातः। कतिपयैरहोभिर्विश्वभूतिर्निजावरजं विशाखभूतिं राज्ये विनिवेश्य तनयं च यौवराज्ये विधाय वनाय प्रचलितः। युवराजेन विश्वनन्दिना विहारार्थं विचित्रतरमुद्यानं विधापितम्। तत्रासौ विलासिजनेन सह सर्वदा विहरति स्म।

अथैकदा विशाखभूतेः प्रियसूनुर्विशाखनन्दी विहरंस्तस्मिन् कानने केलिं कर्तुं समागतः। तस्य नन्दनवनस्येव मनोहारिणीं शोभां विलोक्य स उत्ताम्यता हृदयेन कुतूहलं धारयितुं नापारयत्। तत्र चाहो रम्योऽयं द्राक्षामण्डपः, शोभनेयं लतादोलाऽतिरमणीयः पद्माकर इति स्निग्धप्रदेशस्य दर्शनलाभेनाक्षिप्तहृदयः सुचिरं व्यचरत्। इतस्ततः सानन्दं विहरतस्तस्य मनस्यासीत्। "हृदयहारिणी खल्वियं वनश्रीः। अतिधूर्तो मम भ्राता च येनेयता कालेन लोचनोत्सवोऽयमुद्यानोद्देशो मे चक्षुर्गोचरमपि न प्रापितः। तदीदृशं त्रिभुवनविस्मयकारकमाराममनात्मीकृतवतो मे जन्मना किं प्रयोजनम्?" इति।

एवं विचिन्तयन् विशाखनन्दी तत्क्षणमेव जननीमुपेत्य तस्यै सर्वमप्यात्मनो मनोगतं शंसितवान्। सापि पुत्रमोहात् स्वतनयाय युवराजस्यारामं प्रदापितुमनुबन्धेन नराधिपमयाचत। युवराजस्य सदैव हिततत्परेणापि विशाखभूतिना वल्लभाया विज्ञप्तिरभ्यमन्यत। अनन्तरं भ्रात्रीयमाहूय राज्ञा सकैतवमेवमुक्तम्। "वत्स विश्वनन्दिन्! जानासि त्वं यत्कामरूपनाथो मम प्रतिकूले पथि वर्तते। तं विजे-

तुमहं द्रुतमभ्येमि " । एवं पितृव्यस्य वचनं विश्रुत्य युवराजो विश्वनन्दी व्याहरत् । " तात, ! मयि तिष्ठति भवतः कः प्रयासः ? प्रेषयतु भवान् माममुमहं विजेष्ये । प्रतिपक्षमप्राप्य मत्प्रतापो भुजयोरेवेयन्तं कालं विलीयमानास्तिष्ठति । अयं च मे कालः प्रतापमारोपयितुम् । तदस्मिन् युद्धे प्रत्यक्षीकरोतु भवान् मम विक्रान्तविशेषम् " ।

एवं सावलेपं ब्रुवाणं युवराजं महता बलेन राजा विशाखभूतिः शीघ्रं रिपुदेशं प्रस्थापितवान् । युवेशेनापि वेगतः कामरूपदेशमभिगत्य परया प्रतापशक्त्या सपत्नः प्रवणीकृतः । ततश्च निरवर्तत सानन्दं स्वपुरीं पितृव्याज्ञां सफलीकृत्याप्रतिरथो विजयी विश्वनन्दी ।

अथ गच्छता तेन मार्गे स्वनगरात् ससंभ्रमं पलायमानो जनसम्मर्दो दृष्टः । तत्कारणमधिगन्तुं युवेशेनानिरुद्धनामा कश्चन नरोऽनुयुक्तोऽगदत् । " युवराज ! भवति रिपुं जेतुं प्रस्थितवति सति विशाखनन्दी वनमवस्कन्द्य तत्परितो दुर्गतरं दुर्गं च विधापितवान् । भवदीयमारामं प्रसभमपहृत्य भवन्तमपहन्तुमपीहते । अनया वार्तयोपजातानिष्टशङ्कोऽयं जनसमुदायो भयेन पलायते " । इति । तद्वचनेन विचारदक्षो विश्वनन्दी सचिवमभाषत । " मंत्रिवर्य ! यत्र चित्तवृत्तिर्मम त्रपते तदुपादाय विधात्रैव पुरःस्थितम् । विनिवृत्य पाश्चाच्चेत् प्रयामि जना मां कातरं मन्येरन् । यदि त हन्मि ततो जनापवादः । किं विधेयम् ? निवेदयतु भवान् कतर-

द्भवतेऽनयो रोचते "। इति । ततः सचिवेन स्फुटमेवं प्रत्युत्तरं दत्तम् । " नरनाथ ! यथा वीरलक्ष्मीर्विमुखी न भवेत्तदेवानुष्ठातव्यम् "।

तथाविधो युद्धाय प्रोत्साहितो युवराजो दुर्गमुग्रकोपादभ्यरि समभ्यागतः। विशाखनन्द्यपि वारकीरमारूढो विग्रहार्थं रणभूमिं प्राप्तः। प्रधनाय तौ द्वावपि वीरावन्योन्यमभ्यैताम् । विशाखनन्दिना सह तुमुलं कदनं कुर्वतो विश्वनन्दिनः खड्गः समरे भग्नः ।



ततः सहसैव समीपस्थं शिलामयं स्तम्भमतुलशक्त्योत्पाट्य विशाखनन्दिनं तरसाधावत् । विशाखनन्दी तदुग्रसत्वं तमन्तकनिभमन्तिकमायान्तमालोक्य सवेपथुरभवत्। भयेन तस्य वदनं लुप्तद्युति जातम्।

झटित्येवात्मानं रक्षितुं तस्मात् स्थानात् पलाय्य कपित्थमारोहत् । परं रोषसंतप्तो युवराजो महता सामर्थ्येन तं द्रुममपि समूलमुद्धृतवान् । तदा भयाक्रान्तो विशाखनन्दी रचिताञ्जलिर्नम्रशरणो युवेशमेव शरणं प्रपन्नः । पादानतं स्वकीयं पितृव्यपुत्रं निरीक्ष्य युवराजः कोपं विहाय स्वयमेव लज्जामातनोत् । आत्मनो दुष्प्रवृत्तिं पुनः पुनरनिन्दच्च । पितृव्यस्याग्रे कथं वा स्थातव्यं किं वाभिधातव्यमिति स्वमाकलय्य हृदयेन गृहीतलज्जो राज्यं विहायागारान्निष्क्रान्तः ।

## परीक्षा ।

१ ल्यबन्तरूपाणि दर्शयत । रम्, अव + स्कन्द्, जि, वि + हन्.

२ (अ) समासा विगृह्यन्ताम् । अन्तकनिभम्, प्रवणीकृतः, अभ्यरि.

(आ) उचितविभक्तयो योजनीयाः । सिंहसेनेन ( यथार्थनामन् ), रत्नानां [ सत् ], वपुः [ तावक ].

३ प्रश्नाः । (क) विश्वनन्दी कस्य सुतः ? । विशाखनन्दी च कस्य ? (ख) केन कारणेन विशाखभूतिर्विश्वनन्दिनं युद्धाय प्राहिणोत् ? (ग) मार्गे पलायमानोऽनुयुक्तो नरो युवेशं किमकथयत् ? [घ] केन कथं च युवराजो युद्धाय प्रोत्साहितः ? (ङ) विशाखनन्दी किमर्थं युवेशं शरणं प्रपन्नः ?

४ [अ] संशोध्यन्ताम् । (अ) कलिङ्गं जित्वा योधाः कुसुमपुरं गतवन्तः । (आ) समागतेषु बालेषु तान् फलानि दातुमारभस्व । [इ] अन्धं दीपस्य किं प्रयोजनम् ?

[ब] व्युत्पत्तिं दर्शयत । अन्वमन्यत, विजेष्ये, विधापितवान्, प्रापितः.

५ प्रयोगान्तरं विधीयताम् । [१] किं विधेयम् ? [२] यथा वीरलक्ष्मीर्विमुखी न भवेत्तदेवानुष्ठातव्यम् । (३) प्रत्यक्षीकरोतु भवान् मम विक्रान्तविशेषम् ।

## चतुर्दशः पाठः ।

# सूर्यास्तः ।

करैः शैलाग्रसंलग्नैर्भानुरालक्ष्यत क्षणम् ।
पातभीत्या करालाग्रैः कराळम्बामिवाश्रयन् ॥१॥
पतन्तं वारुणीसङ्गात्परिलुप्तविभावसुम् ।
नालम्बत बतास्ताद्रिर्भानुं बिभ्यदिवैनसः ॥२॥
गतो नु दिनमन्वेष्टुं प्रविष्टो नु रसातलम् ।
तिरोहितो नु शृङ्गाग्रैर्दृष्टोऽस्ताद्रेर्न भानुमान् ॥३॥
व्यसनेऽस्मिन्दिनेशस्य शुचेव परिपीडिताः ।
विच्छायवदना जातास्तमोरुद्धा दिगङ्गनाः ॥४॥
पद्मिन्यो म्लानपद्मास्या द्विरेफकरुणारुतैः ।
शोचन्त्य इव संवृत्ता वियोगेन विभावसोः ॥५॥

अनुक्तापि च सन्ध्येयं परित्यक्ता विवस्वता ।
प्रविष्टा वाग्निमारक्तच्छविरालक्ष्यताम्बरे ॥६॥
संध्यारागः स्फुरन् दिक्षु क्षणं दृष्टः प्रियागमे ।
मानिनीनां मनोरागः कृत्स्नो मूर्च्छाविवेकतः ॥७॥
धृतरक्तांशुकां संध्यामनुयान्तीं दिनाधिपम् ।
अमन्यत सतीं लोकः कृतानुमरणामिव ॥८॥
चक्रवाकीं धृतोत्कण्ठामनुयान्तीं कृतस्वनाम् ।
अजहादिव चक्राङ्गो नियतिं को नु लङ्घयेत् ? ॥९॥
रवेः किमपराधोऽयं कालस्य नियतेः किमु ? ।
रथाङ्गमिथुनान्यासन् वियुक्तानि यतो मिथः ॥१०॥
घनं तमो विनार्केण व्याप्तवाखिला दिशः ।
विना तेजस्विना प्रायस्तमो रुन्द्धे नु संततम् ॥११॥

महापुराणे ॥

## परीक्षा ।

१ अस्मिन् पाठे भवदीप्सितं किमपि श्लोकचतुष्टयं कण्ठगतं कुरुत ।

---

## पञ्चदशः पाठः ।

## लवकुशयोः ।

अथ चतुर्दश वर्षाणि वनवासं निस्तीर्य रामचन्द्रोऽयोध्यां निवृत्तः । प्राप्तराज्यः स सीतया सहानेकसुखोपभोगान् भुञ्जा-

नो बहून् दिवसानत्यवाहयत्। कालक्रमेण जानकी गर्भवती जाता। तस्या दोहदं पूरयितुकामो दाशरथिर्जनापवादात् पत्नीत्यागे मतिमधत्त। कृतान्तवक्त्रेण नाम सेनापतिनासौ तीर्थयात्रापदेशेन तां वनेऽत्याजयत्।

कतिपयैरहोभिः पुण्डरीकपुराधीशो वज्रजङ्घनामा कोऽपि भूपो मृगयार्थं काननमागतः। तत्र तामेकाकिनीं मुक्तकण्ठं विलपन्तीं लोकित्वा व्यथितान्तरोऽभवत्। ततश्च तेन समाश्वासिता सीता स्वराजधानीमानीयत। तत्र लवकुशनाम सुतद्वयं साजनयत्। अथ पुण्डरीकपुरे सिद्धार्थशर्मा नाम कोऽपि सर्वशास्त्रज्ञो गुरुरासीत्। तत्सकाशाद्भ्रातृद्वयेन सर्वापि विद्या निजौष्ठगता कृता। धनुर्विद्यायां च तौ भ्रातरौ रामलक्ष्मणावप्यतिशयाते स्म।

अथ व्रजता कालेन सीतादर्शनोत्सुकः श्रीनारदः पुण्डरीकपुरीमयात्। तत्र तेन तौ मैथिलीसुतौ दृष्टौ। यावत्तौ तं प्रणमतस्तावत्स वत्सौ! युवामपि श्रीरामलक्ष्मणाविव महाविक्रान्तशालिनौ भवतमित्याशिषं ताभ्यामयच्छत्। तेनाशीर्वचसा कोऽयं श्रीरामचन्द्रः कोऽयं लक्ष्मणश्चेति वृत्तान्तमधिगन्तुं भ्रातृयुगलस्य चेतसि महता कुतूहलेन कृतं पदम्। तथानुयुक्तेन श्रीनारदेनापि वनवासादारभ्य सीतात्यागं यावत्सर्वमपि रामवृत्तं सविशेषं वर्णितम्। श्रुतमात्रेऽस्मिन् वृत्ते तावुभावपि येन स्वमातुर्हीनदशा कृता तस्मिन् दाशरथौ भृशं बद्धवैरौ जातौ। तत्क्षणमेव ताभ्यां कोपेनोक्तम्। "मातराज्ञापय

नौ। आवां रामलक्ष्मणौ पराजित्य तत्र शुभाशीर्भिर्विजयशालिनौ निवर्तावहे "। इति।

जानकी तु स्वात्मजद्वयस्य रणोत्साहं वीक्ष्य सचिन्ताभवत्। ततस्तयाभिहितम्। " वत्सौ ! मैतत्साहसं कुरुतम्। येन त्रिखंडाधीशो दशाननः पराजितः स आर्यपुत्रः कोमलवयसा बालद्वयेन कथं जेतुं शक्यः ? पुनश्च भवतोस्तत्रभवान् पिता। ततो नाहमनर्थकारकं युद्धमनुमन्तुमुत्सहे "। इति। भ्रातृद्वयेन व्याहृतम्। " अम्ब ! विश्रब्धा भव। केशरिकिशोरकावावाम्। आवयोरेष प्रयासो न तातस्य वधार्थः। स तु वैरप्रतिमोचनाय। जननि ! त्वदीयः परित्यागो न विवेकपूर्व इति नौ वितर्कः। सुनिपुणं पश्यतोर्नौ न कोऽप्यपराधलवस्त्वयि दृश्यते। वत्सलं जगन्मातरि विशुद्धवृत्तावपि त्वय्यपराद्धोऽस्ति प्रभू रामचन्द्रः। केवलं तत्र निरपराधित्वं तं प्रत्याययितुमावयोर्व्यवसाय एषः। तस्मा युद्धस्य परिपन्थिनी भव "। इत्युदीर्य सीताया निरुंधत्या अपि युद्धाय बद्धपरिकरौ तौ लवकुशौ साकेताभिमुखं प्रस्थितौ।

## परीक्षा।

१ उत्तराणि दातव्यानि। [अ] किमर्थं रामः सतीत्यागे मतिमकरोत् ? [आ] जानकी पुत्रद्वयं क्व प्रसूतवती ? [इ] लवकुशाभ्यां कस्य सकाशादस्त्रविद्याधिगता ? [ई] भ्रातृद्वयं किमर्थं

दाशरथौ बद्धवैरं जातम् ? [उ] सीता युद्धस्य किमर्थं परिपन्थिनी जाता ?

२ [अ] समासान् साधयत। रामः+ कृष्णः+ हरिः, पीतं + अम्बरं (विष्णुः), वङ्गानां राजा, कुत्सितः पन्थाः, कमलानां गंधः [वायुः].

[आ] विश्लेष्यताम्। अहसद्धरिः, अस्मिँल्लोके, तस्मिन्नट बीमध्ये, आसीच्छ्लाघ्यम्

३ प्रयोगान्तरं विधीयताम्। [क] तेन तौ मैथिलीसुतौ दृष्टौ। [ख] मातराज्ञापय नौ। [ग] मृगपतिरात्मनः सटाभारं बहु मन्यते।

[अ] व्युत्पत्तिं दर्शयत। अजनयत्, अतिशयाते, उत्क्रम्, प्रत्याययितुम्.

[आ] वाक्ये समुपयुज्यन्ताम्। अप + राध्, परिकरं बन्ध्, कोऽर्थः.

---

## षोडशः पाठः।

# पितापुत्राणां युद्धम्।

अथायोध्याया अन्तिकमुपेत्य लवकुशाभ्यां कश्चनापसर्पः कोसलपतये प्रेषितः। दूतमुखेन प्रधनाभिप्रायं विदित्वा दाशरथिरपि युद्धाय सज्जोऽभवत्। स्यन्दनेन च सत्वरं सेनाभिः सह सलक्ष्मणः समराङ्ग-

णमवतीर्णः। युद्धं दिदृक्षुर्वैदेही श्रीनारदेन सह विमानेन गगन एव स्थिता। रणाभिनिवेशिनो भ्रातृयुगलस्यापि वीर्यश्रीः प्रतिक्षणं प्रस्फुरति स्म । आचिरात्तुल्यप्रतिद्वन्द्वि युद्धं प्रसृतम् । अन्योन्यैः प्रतिपक्षस्य बहवो योधा आहवे निहताः । अन्ते पितापुत्राणां युद्धं प्रवृत्तम् । लवो बलभद्रे कुशश्च केशवे लग्नः । धनुर्धारिणा रामचन्द्रेण धनुराकर्णमाकृष्य निशातो बाणो लवे मुक्तः। लवेन तु निजबाणैर्दाशरथिशरो मध्य एवाभज्यत। कुशोऽपि शीघ्रं द्वितीयेनेषुणा रथस्थं लक्ष्मणं तरसा मूर्च्छितमकरोत् ।



रामश्च निजभ्रातरं तदवस्थं विलोक्य भृशं संक्रुद्धस्तौ लवकुशौ मृत्योर्गोचरं नेतुं साराान्नाराचानास्यत्। अन्तराल एव ताभ्यां तेऽपि शरैः खण्डिताः। बालद्वयस्याचिन्त्यं बलं युधि कौशलं च ज्ञात्वा स्वजयमुद्दिश्य दाशरथिर्मनसा संदेहदोलामारोहत् । कथंचन

धृतिमवलम्ब्य बलभद्रः पुनरपि युद्धाय सन्नद्धोऽभवत् । केशवोऽपि चिरेणोपात्तचेतनोऽजायत । ततो बलभद्रेण द्यावापृथिव्यौ व्यापूरयंती घनतमिस्रा विनिर्मिता । लवकुशाभ्यां सूर्यास्त्रेणाचिरात्साच्छिद्यत । तदनु स समंततो दृष्टिविषाग्निसर्पान् विसृष्टवान् । भ्रातृद्वयं तु सपद्येव गरुडास्त्रेण तान्निराकरोत् । अनन्तरं ज्वलनेनासौ कृत्स्नं धरातलमखिलं व्योम चावृणत् । विद्यामयैरम्भोदविसृष्टतोयैस्तमाशु तन्निरवापयत् । अन्ते बलभद्रेण सुदुर्निवारा शक्तिरमुच्यत । किन्तु लवकुशयोर्वक्षःस्थले सा हारलता भूत्वा पतित ।

एवं विफलितशस्त्रसारो रामचन्द्रः करेण चक्रमादाय यावत्तयोः क्षिपति तावन्नारदो विमानाद्भूमाववतीर्य दाशरथिं विहस्यावदत् । " राजन् ! कृतं कृतं तव श्रमेण । इदं तव चक्रं प्रयुक्तमपि वृथा स्यात् । ययोरुपरि त्वं चक्रं क्षेप्तुमुद्यतोऽसि तौ सीतादेव्याः पुत्रौ लवकुशौ नाम " । इति श्रीनारदस्य वचनं निशम्य रामलक्ष्मणौ प्रमोदस्य परां कोटिमधिगतौ । केशवश्च सत्वरं निजभ्रात्रीयौ प्राप्य महता प्रेम्णा तयोः शीर्षमाघ्राय सुचिरं पर्यरभत । दाशरथेर्हृदयमपि स्नेहेनाभ्यष्यन्दत । ततो लवकुशौ सविनयं पितापितृव्याववन्दताम् । अनन्तरं रघुपतिस्तेजस्विनात्मनः पुत्रद्वयेन सार्धं स्वपुरीं प्राविशत् ।

# परीक्षा ।

१ स्वमातृभाषायां पितापुत्राणां युद्धं वर्ण्यताम् ।

२ [अ] संशोध्यन्ताम् । [१] अतस्त्वां दूरादेव नमः । [२] अयं नरश्चौराणामतीव बिभेति । [३] रथस्थ एव बहु शोभसे राक्षसमत्याद्रस्य । [४] रामेति नामा दशरथस्य पुत्रः ।

[आ] व्युत्पत्तिं दर्शयत । विसृष्टवान्, प्रगृह्य, अभ्यष्यन्दत.

३ प्रयोगान्तरं विधीयताम् । [अ] अन्योन्यैः प्रतिपक्षस्य बहवो योधा आहवे निहताः । [ब] कुशो लक्ष्मणं मूर्छितमकरोत् । [क] बलभद्रेण शक्तिरमुच्यत ।

४ [अ] समासा विगृह्यन्ताम् । भ्रातृद्वयम्, द्यावापृथिव्यौ, तुल्यप्रतिद्वंद्वि.

[ब] वाक्ये समुपयुज्यन्ताम् । अस् , कृतम्, क्षिप्.

[क] संधिः क्रियताम् । रामः + क्षिपति + अस्त्रं + अरौ, सा + छिनात्ति, लभेत + एते + अङ्गने.



## सप्तदशः पाठः ।

### लक्ष्मीस्वभावः ।

शूरं विनीतमिव सज्जनवत् कुलीनं
विद्यामहान्तमिव धार्मिकमुत्सृजन्ती ।
चिन्ताज्वरप्रसवभूमिरियं हि लोके
लक्ष्मीः खला क्षणसखी कलुषीकरोति ॥ १ ॥

उच्चैःपदं नयति जन्तुमधः पुनस्तं
वात्येव रेणुनिचयं चपला विभूतिः ।
भ्राम्यत्यतीव जनता खलु तत्सुखाय
सा सूतवत् करगतापि विनाशमेति ॥ २ ॥

तातस्तावत्तव जडनिधिः, सोदरः कालकूटः
कृष्णं लक्ष्मि ! प्रणयपरता, पङ्कजाते रतिश्च ।
मायावत्याः सकलनृपतिस्वैरिणीवृत्तिभाजः
कः प्रेमान्धो भवतु कृतधीर्विभ्रमेवाचरन्त्याः ? ॥ ३ ॥

अनवाप्तधनोऽपि जनः साकिंचनो भवति चाटुतापात्रम् ।
मातर्लक्ष्मि ! तवायं महिमा किमिवोच्यतामत्र ? ॥ ४ ॥

स्वच्छन्दवृत्तेः शनिदृष्टिरेषा
सुखोत्सवोपायविधौ च विष्टिः ।

केतूद्गतिः कलिमनोरथानां
श्रीः स्याद्विना दानमनर्थहेतुः ॥ ५ ॥

यशस्तिलकचम्पूकाव्ये ।

नीरोषितायाः अपि सर्वदास्याः
पश्यामि नार्द्रं हृदयं कदाचित् ।
युक्तं ततः पुंसि कलामयेऽपि
स्थिरो न लक्ष्म्याः प्रणयानुबन्धः ॥ ६ ॥

धर्मशर्माभ्युदये ।

निम्नं गच्छति निम्नगेव नितरां, निद्रेव विष्कम्भते
चैतन्यं मदिरेव पुष्यति मदं, धूम्येव दत्तेऽन्धताम् ।
चापल्यं चपलेव चुंबति दव-ज्वालेव तृष्णां नय-
त्युल्लासं कुलटाङ्गनेव कमला, स्वैरं परिभ्राम्यति ॥७॥

दायादाः स्पृहयन्ति तस्करगणा, मुष्णन्ति भूमीभुजो
गृह्णन्ति च्छलमाकलय्य हुतभुग्भस्मीकरोति क्षणात् ।
अम्भः प्लावयते क्षितौ विनिहितं, यक्षा हरन्ते हठात्
दुर्वृत्तास्तनया नयन्ति निधनं धिग्बह्वधीनं धनम् ॥८॥

लक्ष्मीः सर्पति नीचमर्णवपयःसंगादिवाम्भोजिनी-
संसर्गादिव कंटकाकुलपदा न क्वापि धत्ते पदम् ।
चैतन्यं विषसन्निधेरिव नृणामुज्जासयत्यञ्जसा
धर्मस्थाननियोजनेन गुणिभिर्ग्राह्यं तदस्याः फलम् ॥ ९ ॥

सूक्तिमुक्तावल्याम् ।

" मूर्खाय यच्छसि धनं कमले ! किमर्थं ?
विद्वज्जने किमथवा तव मत्सरोऽस्ति ? " ।
" जानात्यलं खलु भवानयि कान्त ! विद्वान्
मद्वैरिणीपतिरनन्यगतिश्च मूर्खः " ॥ १० ॥

## परीक्षा ।

१ उत्तराणि दातव्यानि । [१] कस्तातो लक्ष्म्याः ? [२] कस्मिंस्तस्या रतिः ? [३] लक्ष्मीर्मूर्खेभ्यो द्रविणं किमर्थं ददाति ? [४] का तस्या वैरिणी ?

२ वाक्ये समुपयुज्यन्ताम् । स्पृह्, दा, पदं धा.

३ संधिः क्रियताम् । स्वे + उत्सङ्गे, भोः + आदिनाथ, अहो + आश्चर्यम्, एते + ऋषयः.

## अष्टादशः पाठः ।

# साधु, सौभद्र ! साधु ।

( ततः प्रविशति युधिष्ठिरः पुरुषश्च । )

युधिष्ठिरः— ( सचिन्तः । ) अद्याप्येव कथं न कोऽपि समरात् संप्राप्तः ? कः कालः समरगतस्याभिमन्योः । ( पुरुषमवलोक्य । ) बुधक !

पुरुषः—देव ! को निदेशः ?

युधिष्ठिरः—उच्यतां सहदेवः—समरभूमिं गत्वा तत्रभवतः कुमारस्योपलब्धिं लब्ध्वा शीघ्रं निवर्तस्वेति ।

पुरुषः—यदाज्ञापयति देवः । ( निष्क्रम्य पुनः प्रविश्य सहर्षम् । ) देव ! पाञ्चालकः प्राप्तः ।

युधिष्ठिरः— त्वरितं प्रवेशय ।

पुरुषः— ( निष्क्रम्य पाञ्चालकेन सह प्रविश्य । ) एष महाराजः । उपसर्पतु भवान् ।

पाञ्चालकः— जयतु जयतु देवः । प्रियमावेदयामि महाराजाय ।

युधिष्ठिरः—पाञ्चालक ! कच्चित् कुशलं वत्सस्य ? चक्रव्यूहे सुखेन लब्धप्रवेशोऽस्ति मे बालः ?

पञ्चालकः—देव ! समरगोचरं पृच्छ ।

युधिष्ठिरः— ( सहर्षम् । ) सत्यं समरगोचरो मे वत्सः ?

पञ्चालकः—अथ किम् ।

युधिष्ठिरः—साधु, सौभद्र ! साधु । पाञ्चालक ! कथ्यतां तावन्मे प्रकृतिदुर्ललितस्य वत्सस्य पराक्रमः ।

पाञ्चालकः— श्रृणोतु देवः । अद्य यावत्कुमारेण शरधारावर्षिणाभियुक्तः कुरुबलसेनापतिः ।

युधिष्ठिरः— ततस्ततः ।

पाञ्चालकः— ततो देव ! उभयबलमध्ये चिरकालं जातं सायकवर्षि समरदुर्दिनम् ।

युधिष्ठिरः— ततस्ततः ।

पाञ्चालकः— तथाभियुक्तं सेनापतिं प्रेक्ष्य ससंभ्रमं चापहस्तो रथेनोपगतस्तं देशं ससैन्यः कुमारवृषसेनः ।

युधिष्ठिरः— किं ततः ?

पाञ्चालकः— ततश्च देव ! तेन शिलीमुखैः प्रच्छादितः सौभद्रकुमारस्य रथवरः ।

युधिष्ठिरः— [ साशङ्कम् । ] ततस्ततः ।

पाञ्चालकः— कुमाराभिमन्युना महौजसा तु निशितैः शरैः कुमारवृषसेनस्य रथं भङ्क्त्वा सर्वत्र कुरुबलं पलायितम् ।

युधिष्ठिरः— [ सावहित्थम् । ] ततस्ततः ।

पाञ्चालकः— ततो दुःशासनदुर्योधनकर्णादयः ससैनिका एकपदे मिलित्वा कुमारं घातयितुमागताः ।

युधिष्ठिरः— [ सभयम् । ] ततस्ततः ।

पाञ्चालकः— ततः समराभिलाषिणा कर्णेनोक्तम् । अरे रे युधिष्ठिरवत्सल–( अर्धोक्ते लज्जां नाटयति । )

युधिष्ठिरः— पाञ्चालक ! कथ्यताम् । परवचनमेतत् ।

पाञ्चालकः— अरे रे युधिष्ठिरवत्सल वत्सार्जुने ! ह्यः किल मया तावकौ पितृव्यौ युधिष्ठिरभीमौ समराङ्गणाज्जीवग्राहं ग्राहितौ । नकुलसहदेवौ च मां दृष्ट्वैव सभयं युद्धभूमेः प्रनष्टौ । अद्य त्वमुपस्थितः । त्वं च बहुविधं भोग्यं भुञ्जानः प्राणापहारिणि युद्धे किमर्थं मतिं करोषि ? । गच्छ, स्वज्ञातिमध्ये भवेति ।

युधिष्ठिरः— किं ततः ?

पाञ्चालकः— कुमारेणापि प्रतिभाषितम् । " अहो ताताधिक्षेपमुखर तात ! असमाप्तोऽयमद्यापि समरव्यापारः । प्रेक्षस्व तावन्मे धनुर्विद्याचतुरत्वम् " । इत्युक्त्वा दशभिः शरैर्भग्नरथौ दुर्योधनदुःशासनौ पलाययितौ ।

युधिष्ठिरः— ततस्ततः ।

पाञ्चालकः— ततश्च कर्णोऽभिमन्युकुमारश्चान्योन्यस्योपरि समं व्यापारयितुं प्रवृत्तौ शिलीमुखासारम् ।

युधिष्ठिरः— [ सभयम् । ] ततस्ततः ।

पाञ्चालकः— ततो देव ! षड्भिः शरैर्विरथः कृतः कुमारोऽङ्गराजेन । कुमारोऽपि परिजनोपनीतमन्यं रथमारुह्य पुनरपि कर्णेन सहायोद्धुं प्रवृत्तः ।

युधिष्ठिरः— साधु, सौभद्र ! साधु । ततस्ततः ।

पाञ्चालकः— ततो भणितं च कुमारेण— " अङ्गराज ! मम शरा युष्मच्छरीरमुज्झित्वान्यस्मिन्निपतन्ति " । इति शरसहस्रैः कर्णशरीरं प्रच्छाद्य सिंहनादेन गर्जितुं प्रवृत्तः ।

युधिष्ठिरः— [ सविस्मयम् । ] ततस्ततः ।

पाञ्चालकः— ततश्च देव ! तं शरसंपातं समवधूय जातमन्युना कर्णेन प्रभाभासुरा शक्तिः साट्टहासं विमुक्ता कुमाराभिमुखी ।

युधिष्ठिरः— [ सविषादम् । ] अहह ! किं ततः ?

पाञ्चालकः— ततो देव ! प्रज्वलन्तीं शक्तिं प्रेक्ष्य विनादितं कौरवबलेन । दुष्करं दुष्करं चाक्रन्दितं पाण्डवसैन्येन ।

युधिष्ठिरः— ( सभयम् ) किमन्यत् ?

पाञ्चालकः— ततो देव ! वीर्यशालिना कुमाराभिमन्युनात्मनो निशितक्षुरप्रेण त्रिधा कृता शक्तिः ।

युधिष्ठिरः—साधु, सौभद्र ! साधु । त्वया कलभेन यूथपतिरनुकृतः । पाञ्चालक ! किं ततः ?

पाञ्चालकः—ततो देव ! कुमारः सप्तभिराशुगैः कर्णस्य रथं भङ्क्त्वा सूतं निहत्य ध्वजं चापात्य समराङ्गणात्तमद्रावयत् ।

युधिष्ठिरः—( सहर्षम् ) ततस्ततः ।

पाञ्चालकः—ततो बृहद्बलो नाम राजवीरः ससप्तशतसैन्यः कुमारमभिमन्युमभियुक्तवान् ।

युधिष्ठिरः— किमन्यत् ?

पाञ्चालकः— कुमारेण तु चतुर्भिर्नाराचैः स पुरन्दरपुरातिथिः कृतः । पश्चाद्बलं च तुमुलं कृतम् ।

युधिष्ठिरः—ततस्ततः ।

पाञ्चालकः—ततश्च देव ! निर्जितसकलराजमण्डले विजयशालिनि कुमाराभिमन्यौ निपतिता गुरोर्द्रोणाचार्यस्य दृष्टिः ।

युधिष्ठिरः—( सभयम् । ) ततस्ततः ।

पाञ्चालकः— युयुत्सुं कुमारं द्रोणाचार्योऽभाषत । " अरे रे सौभद्र ! पितुरपि तावत्ते न युक्तं मम कुपितस्याभिमुखं स्थातुम् । किं पुनस्तव बालस्य ? तद्गच्छ । अपरैः कुमारैः सह गत्वा युध्यस्व " । एवं वाचं निशम्य चापधारिणा कुमारेणाचिरात्स्वसामर्थ्येन पराजितो गुरुद्रोणाचार्योऽपि । तत्समये नभसः सुरविमुक्ता सुरभिः सुमनसां वृष्टिरपतत् ।

युधिष्ठिरः— साधु सौभद्र ! साधु । ततः किम् ?

पाञ्चालकः— देव ! किं बहुना ? अश्वत्थामानं विद्रावय, कृपावर्मानं भापय, शकुनिशल्यकृपाचार्याणां रथान्नाशय, लुनीहि ध्वजान्, कौरवस्याक्षौहिणीमवस्कन्देति बहुविधं समरकर्म कुर्वाणः शोभते षडानन इवारातिमर्दनोऽभिमन्युकुमारः ।

युधिष्ठिरः— साधु, सौभद्र ! साधु । बालस्यापि ते महान् पराक्रमो मुग्धस्वभावेऽपि ।

## परीक्षा ।

१ (क) व्युत्पत्तिं दर्शयत । लुनीहि, विद्रावय, भङ्क्त्वा, प्रच्छाद्य, घातयितुम्, अभियुक्तवान्, पलाययितम्.

(ख) समासा विगृह्यन्ताम् । शरसंपातम्, सोपहासम्, चापहस्तः ।

२ प्रयोगान्तरं विधीयताम् । (१) कुमारेणाभियुक्तः कुरुबलसेनापतिः । (२) स्वज्ञातिमध्ये भव । (३) प्रेक्षस्व तावन्मे धनुर्विद्याचतुरत्वम् ।

३ संशोध्यन्ताम् । [क] तं दिनमारभ्य मम मनः पर्याकुलं जातम् । [ख] अहं ते वीराश्च शत्रून् पराजयन् । [ग] ते रथं पोदनपुराय गतवन्तः । [घ] रामाय द्वौ पुत्रावास्ताम् ।

४ वाक्यविच्छेदः संपूर्यताम् । (प) सः—— स्पृहयति । (फ) क्रुद्धः पुरुषः —— अविशते । (ब) रामः —— अभिक्रुध्यति ।

## एकोनविंशतिः पाठः ।

## अभिमन्युवधः ।

( ततः प्रविशति सप्रहारः सूतः )

युधिष्ठिरः— [ दृष्ट्वा ] किमेकाकी संग्रामान्निवृत्तः ? क्वाधुना श्रूयते मे वत्सेन ? कच्चित्कुशली मेऽभिमन्युः ?

[ सूतो नमितमुखः सखेदं तूष्णीं तिष्ठति । ]

( ससाध्वसं सकम्पं च । ) सूत ! किमर्थं जोषमास्से । तव मौनावलम्बनमेव पर्याकुलयति मे हृदयम् । शीघ्रं निवेदय ।

सूतः—( स्वगतम् । ) अशुभकथनं मे दुःखमावहति । का गतिः ? ( प्रकाशम् । सकरुणं पादयोर्निपतन् ) आसीदिदानीं कुमाराभिमन्युवध—( इत्यर्धोक्ते मुखमाच्छाद्य रोदिति । )

युधिष्ठिरः—( सहसा भूमौ पतन् । ) हा वत्साभिमन्यो ! हा युवराज ! हा मदङ्कलालनोचित बाल ! क्व यासि ?

( निःश्वस्य मोहमुपगतः । )

पाञ्चालकः—राजन् ! समाश्वसिहि, समाश्वसिहि ।

युधिष्ठिरः—( संज्ञां लब्ध्वा निःश्वस्य । ) ननु भो हतविधे ! कृपाविरहित ! पाण्डवकुलविमुख !

अपि नाम भवेन्मृत्युर्न च दुःश्रवणं श्रवः ।

पाञ्चालकः— शान्तं पापं शान्तं पापम् । महाराज ! किमिदं ?

युधिष्ठिरः–विघातिताभिमन्योर्मे किं राज्येन जयेन वा? १

(इति मोहमुपगतः ।)

पाञ्चालकः — ( राजानमवलोक्य । ) कथमद्यापि चेतनां न लभते महाराजः । कष्टं भोः कष्टम् ।

**अनतिक्रमणीयेयमीश्वरेच्छा बलीयसी ॥**
**पुण्यवान् पुरुषोऽप्यत्र नूनं भवति दुःखभाक् ॥२॥**

महाराज ! समाश्वसितु, समाश्वसितु ।

( इति समाश्वासयति ।

युधिष्ठिरः—( लब्धसंज्ञः । )

**अयि वत्स ! कर्णसुखदां प्रयच्छ मे**
**गिरमुद्गिरन्निव मुदं मयि स्थिराम् ।**
**सततावियुक्तमकृताप्रियं प्रिय—**
**मभिमन्युबालक ! विहाय यासि माम् ॥ ३ ॥**

( निःश्वस्य । मुहूर्तमिव स्थित्वा । ) सूत ! केनैतदसंभवनीयमस्मत्कुलान्तकरणं कर्म कृतं स्यात ?

सूतः-- आयुष्मन् !

**विद्राविते गुरौ द्रोणे, द्रोणौ च विनिपातिते ।**
**युद्धभूमिं ततः प्राप्तो गदामात्रसहायकः ॥ ४ ॥**

युधिष्ठिरः— कथ्य कथ्य ?

सूतः— भवत्कुलदीपकस्यान्तको दौःशासनिः ।

युधिष्ठिरः— [ सबाष्पम् ] अहह ! पराङ्मुखं दैवमस्माकम् । सूत ! तत्समये किं प्रमत्तो मे वत्सः ?

सूतः— अथ किम् ।

युधिष्ठिरः— [ सविषादम् । ] कथमिव ?



सूतः— पराजितेऽश्वत्थामनि गदाहस्तौ तौ द्वावपि वीरौ युद्धं कुर्वन्तौ परस्पराघातैर्मूर्च्छितौ जातौ । बहुभिर्महारथैः सह युध्यमानोऽभिमन्युर्वीरमणिः समरकर्मणा नितान्तं परिश्रान्तो न शीघ्रं गतमूर्च्छ आसीत् । स दुराचारो दौःशासनिर्लक्ष्मणस्तत्पूर्वमुपात्तचेतनो

लब्धावकाशो न प्रबुद्धस्य न वा मूर्च्छितस्याभिमन्युकुमारस्योपरि तीव्रं गदाप्रहारमकरोत् ।

युधिष्टिरः—( सास्रम् । ) अहह ! कुमाराभिमन्यो ! अल-मतः परं श्रुत्वा । हा वत्स सौभद्र ! हा गदायुद्धप्रिय ! हा पांडव-कुलप्ररोह ! हा धनञ्जयनिर्विशेष ! सर्वगुरुवत्सल ! प्रियदर्शन ! प्रयच्छ मे प्रतिवचनम् ।

**पर्याप्तनेत्रमचिरोदितचन्द्रकान्त-**
**मुद्भिद्यमाननवयौवनरम्यशोभम् ।**
**प्राणापहारपरिवर्तितदृष्टि दृष्टं**
**मुक्तेन तत्कथमिवाननपङ्कजं ते ?॥ ५ ॥**

[ इति मोहमुपगतः । ]

## परीक्षा ।

१ संधिः क्रियताम् । रामः + स्तौति, पद्मा + इति, रमयन् + जनान्, साधुः + रम्भाभिमुखः, भोः + गोविन्द.

२ व्युत्पत्तिं दर्शयत । विघातितः, समाश्वसितु, आच्छाद्य.

३ प्रयोगान्तरं विधीयताम् । (१) केनैतत् कर्म कृतं स्यात् ? (२) दीप्तिं निवेदय । (३) चेतनां न लभते महाराजः ।

विंशतिः पाठः ।

## प्रभुस्तवनम् ।

अथ विभो ! तव संस्तवसद्विधौ
  मम फलस्पृहयापि समुद्यता ।
स्खलति वीक्ष्य मतिर्गुणगौरवं
  श्रमकारोऽपि मतोऽपि महाभरः ॥ १ ॥
अधिप ! सर्वजनप्रमदावहा
  नवसुधाविशदास्तिमिरच्छिदः ।
शशिकरा इव भांति भवद्गुणा-
  स्तव गुणा इव चन्द्रमसः कराः ॥ २ ॥
तव निशम्य सुदिव्यरवं मुदा
  समुपयांति विभो ! खलु भाक्तिकाः ।
भवति किं न मुखाय शिखंडिना-
  मभिनवाम्बुधरस्य महाध्वनिः ? ॥ ३ ॥
वहति यो हृदयेन भवद्गुणान्
  प्रविमलान् दुरितं तमपोज्झति ।
निशि समग्रशशाङ्ककरान्वितः
  सुरपथस्तमसा किमु लिप्यते ? ॥ ४ ॥
इदमनन्तचतुष्टयवैभवं
  न च परो लभते भवता विना ।

जगति दुग्धपयोधिरिवार्णवः
किमु वहत्यपरोऽम्बु सुधामयम् ? ॥ ५ ॥
गुणविशेषविदः स्वसुखेच्छया
प्रतिदिनं हि भवन्तमुपासते ।
कुसुमितं सहकारमिवालयो
न हि भजन्त्यपकारिणमङ्गिनः ॥ ६ ॥
विकसितेऽभिनवेऽपि महोत्पले
सरसि नैव तथा विमलाम्भसि ।
न सकलेऽपि विधौ लभते धृतिं
त्वयि ! यथा खलु चक्षुरिहाङ्गिनाम् ॥ ७ ॥
अधिप ! मग्नमगाधभवोदधौ
जगदिदं भवतैव समुद्धृतम् ।
कथय कस्तमसावृतमम्बरं
विमलयेदपरो रविणा विना ? ॥ ८ ॥
न खलु दोषलवोऽपि निरीक्ष्यते
तव विशुद्धदयाविपुले मते ।
भुवि निसर्गहिमे विधुमण्डले
विदधते पदमुष्णकणाः किमु ? ॥ ९ ॥
पिबति यो वचनामृतमादरा–
त्तव विभो ! श्रवणाञ्जलिना सदा ।
भुवि निरङ्कुशयापि सतृष्णया
स हितबुद्धियुतः परिबाध्यते ? ॥ १० ॥

वर्धमानचरित्रे ।

# परीक्षा ।

१ संधिः क्रियताम् । हे + इन्द्र, सम्यक् + नृत्यति, पुनर् + तिष्ठति, सुख + ऋत, पाशान् + छिनत्ति.

२ संशोध्यन्ताम्, [१] विरमस्व पापात् । [२] सरस्वत्यै दुर्वासा अभिक्रुद्धः । [३] आत्मनां पाठान शिष्याः पठन्ति ।

३ समासान् साधयत । देवानां सखा, सीता जाया यस्य, आदौ सुप्तः पश्चादुत्थितः ( नरः ).

४ प्रयोगान्तरं विधीयताम् ।

[अ] न हि भजन्त्यपकारिणमङ्गिनः ।

[आ] जगदिदं भवतैव समुद्धृतम् ।

[इ] कथय कस्तमसावृतमम्बरं विमलयेदपरो रविणा विना ?



## एकविंशतिः पाठः ।

# सूक्तिसुधासिन्धुः ।

अनुक्तोऽपि गुणो लोके विद्यमानः प्रकाशते ।
प्रकटीक्रियते केन विवस्वानुदितो जने ? ॥१॥
अयं खलु खलाचारो यद्बलात्कारदर्शनम् ।
स्वगुणोत्कीर्तनं दोषोद्भावनं च परेषु यत् ॥२॥
अयं लघुर्महानेष न चिन्ता हि महात्मसु ।
नद्याः पूरप्लवाद्यान्ति समं तीरतृणद्रुमाः ॥३॥
अविचिन्तितमप्ययत्नतः स्वयमुत्पादयति प्रयोजनम् ।
विधिरेकपदे निरङ्कुशः कुशलं वाकुशलं च देहिनाम् ॥४
असहायः समर्थोऽपि न जातु हितसिद्धये ।
वह्निर्वातविहीनो हि बुसस्यापि न दीपकः ॥५॥
अहंकारविहीनस्य किं विवेकेन भूभुजः ? ।
नरे कातरचित्ते हि कः स्यादस्त्रपरिग्रहः ? ॥६॥
अन्तर्मदं करिपतेरिव बृंहितानि
प्रातःकरा इव दिनेशमुदीयमानम् ।
लोकाधिपत्यमिव भावि विनान्तरायं
प्रख्यापयन्ति पुरुषस्य विचेष्टितानि ॥७॥
आत्मनि विवेकविकलः प्रसिद्धिमात्रेण रज्यते सकलः ।
कैरव इव कमलेऽपि हि न श्रीः पूज्यं तथाप्यब्जम् ॥८॥

आः कोमलालापपरेऽपि मा गाः
   प्रमादमन्तःकठिने खलेऽस्मिन् ।
शेवालशालिन्युपले छलेन
   पातो भवेत्केवलदुःखहेतुः ॥ ९ ॥
उच्चासनस्थोऽपि सतां न किञ्चि-
   न्नीचः स चित्तेषु चमत्करोति ।
स्वर्णाद्रिशृङ्गाग्रमधिष्ठितोऽपि
   काको वराकः खलु काक एव ॥ १० ॥
उदयास्तमयारम्भे ग्रहाणां कोऽपरो ग्रहः ? ।
   कोऽन्यः स्रष्टा जगत्स्रष्टुः कपाले भक्ष्यमश्नतः ?॥११॥
एकामात्ये महीपाले नालं लक्ष्मीर्विजृम्भते ।
   लतायास्तत्र का वृद्धिः शाखैका यत्र शाखिनि ? ॥१२
कुलेऽपि किं तात ! तवेदृशी स्थिति-
   र्यदात्मजा श्रीर्न सभास्वपि त्यजेत् ।
नृपाङ्कलीलामिति कीर्तिरीर्ष्यया
   गता ह्युपालब्धुमिवास्य वारिधिम् ॥१३॥
खलं विधात्रा सृजता प्रयत्ना-
   त्किं सज्जनस्योपकृतं न तेन ? ।
ऋते तमांसि द्युमणिर्मणिर्वा
   विना न काचः स्वगुणं व्यनक्ति ॥ १४ ॥
खलूपेक्ष्य लघीयानप्युच्छेद्यो लघुतादृशः ।

क्षुद्रो रेणुरिवाक्षिस्थो रुजत्यरिरुपेक्षितः ॥१५॥

गुणिनां भवति प्रसङ्गतो गुणहीनोऽपि गुणी धरातले।
सुरभीकुरुतेऽथ कर्परं सलिलं पाटलपुष्पवासितम् ॥१६

जीविताच्च पराधीनाज्जीवानां मरणं वरम् ।
मृगेन्द्रस्य मृगेन्द्रत्वं वितीर्णं केन कानने ? ॥१७॥

तरसा येन नीयन्ते कुञ्जरा मदमन्थराः ।
शशकानामसाराणां तत्र स्रोतसि का स्थितिः? ॥१८॥

तेजोहीने महीपाले स्वाः परे च विकुर्वते ।
निःशङ्कं हि न को धत्ते पदं भस्मन्यनूष्मणि ? १९॥

तेजस्तेजस्विनां स्थाने धृतं धृतिकरं भवेत् ।
कराः सूर्याश्मवद्भानोः किं स्फुरन्ति हताश्मनि ?॥२०॥

त्यजसि न हते तृष्णायाषे ! जराङ्गनया नरं
रमितवपुषं धिक् ते स्त्रीत्वं, शठे ! त्रपयोज्झिते ! ।
इति निगदिता कर्णाभ्यर्णे गतैः पलितैरियं
तदपि न गता तृष्णा का वा नु मुञ्चति वल्लभम्? २१॥

दारिद्र्यादपरं नास्ति जंतूनामप्यरुन्तुदम् ।
अत्यक्तं मरणं प्राणैः प्राणिनां हि दरिद्रता ॥ २२ ॥

दुर्योधनः समर्थोऽपि दुर्मन्त्री प्रलयं गतः ।
राज्यमेकशरोऽप्याप्नोत सन्मत्री चन्द्रगुप्तकः ॥ २३॥

दुष्टोऽपि मुञ्चते दोषं स्वकीयं शिष्टसङ्गतः ।
किं मेरुमाश्रितः काको न धत्ते कनकच्छविम्? ॥२४॥

दैवावलम्बनवतः पुरुषस्य हस्ता—
दासादितान्यपि धनानि भवन्ति दूरे ।
आनीय रत्ननिचयं पथि जातनिद्रं
जागर्ति तत्र पथिके हि न जातु दैवम् ॥ २५ ॥
द्वौ सतामभिमतौ नरोत्तमौ जन्म संसदि तयोः प्रशस्यते ।
यो न मुह्यति भये पुरःस्थिते यस्य संपदि मनो न माद्यति
धर्मो नाम कृपामूलः सा तु जीवानुकम्पनम् ।
अशरण्यशरण्यत्वमतो धार्मिकलक्षणम् ॥ २७ ॥
धनार्जनादपि क्षेमे क्षेमादपि च तत्क्षये ।
उत्तरोत्तरवृद्धा हि पीडा नृणामनन्तशः ॥ २८ ॥
धैर्यं विपदि कर्तव्यं साहसं समराङ्गणे ।
औदार्यं दानकाले च ध्यानं सज्ज्ञानमुत्तमैः ॥ २९ ॥
न दुनोति मनस्तीव्रं रिपुरप्रणतस्तथा ।
बन्धुरप्रणमन् गर्वी दुर्विदग्धो यथा प्रभुम् ॥ ३० ॥
न ब्रूते परदूषणं परगुणं वक्त्यल्पमप्यन्वहं
संतोषं वहते परर्द्धिषु पराबाधासु धत्ते शुचम् ।
स्वश्लाघां न करोति नोज्झति नयं नौचित्यमुल्लंघय—
त्युक्त्वाप्यप्रियमप्रियं न रचयत्येतं चरित्रं सताम् ॥ ३१
न शक्यते वशीकर्तुं विना ज्ञानेन मानसम् ।
अङ्कुशेन विना कुत्र क्रियते कुञ्जरो वशे ? ॥ ३२ ॥
न श्रेयसे भवति विक्रमशालिनोऽपि

कोपः परेष्वतिबलस्य समुन्नतेषु ।
अम्भोधरान् समभिलंघ्य मृगाधिराजो
निष्कारणं स्वयमुपैति न किं प्रयासम् ? ॥ ३३ ॥

परस्य तुच्छेऽपि परोऽनुरागी
महत्यपि स्वस्य गुणे न तोषः ।
एवंविधो यस्य मनोविवेकः ।
किं प्रार्थ्यते सोऽत्र हिताय साधुः ? ॥ ३४ ॥

पातकानां समस्तानां द्वे परं पातके स्मृते ।
एकं दुःसचिवो राजा द्वितीयं च तदाश्रयः ॥३५॥

पूज्यमब्जं श्रियः सङ्गाज्ज्येष्ठायाश्च न कैरवम् ।
प्रायो जनेऽन्यसंसर्गाद्गुणिता दोषितापि च ॥ ३६ ॥

प्रसूनमिव निर्गन्धं द्वेष्यो भवति निर्धनः ।
म्लानमालेव वर्षिष्ठो रोगीक्षुरिव नीरसः ॥ ३७ ॥

बहवो न विरोद्धव्या यतो नीतावुदाहृतम् ।
विनश्यति विरोधेन बहूनां बलवानपि ॥ ३८ ॥

भाविन्या विपदो यूयं विपक्षाः किं बुधाः शुचा ? ।
सर्पशंकाविभीताः किं सर्पास्ये करदायिनः? ॥३९॥

मानमेवाभिरक्षन्तु धीराः प्राणैः प्रणश्वरैः ।
नन्वलंकुरुते विश्वं शश्वन्मानार्जितं यशः ॥ ४० ॥

मूर्खं बृहस्पतिमयं वृषलं कुलीनं
व्रात्यं महान्तमधमं पुनरुत्तमं च ।

तुष्टः करोति कुपितश्च विपर्ययेण
मन्त्रीति देव ! विषये सुमहान् प्रवादः ॥ ४१ ॥
मुक्ताफलाच्छमापीय गगनाम्बु नवाम्बुदात् ।
शुष्यत्सरोऽम्बु किं वाञ्छेदुदन्यन्नपि चातकः? ४२॥
यो लोकैकशिरःशिखामणिसमं सर्वोपकारोद्यतं
राजच्छीलगुणाकरं नरवरं कृत्वा पुनर्निर्दयः ।
धाता हन्ति निरर्गलो हतमतिः किं तत्क्रियायां फलं ?
प्रायो निर्दयचेतसां न भवति श्रेयोमतिर्भूतले ॥४३॥
रविरहनि रजन्यामिन्दुरेष प्रतापी
तदपि न तिमिराणां संततेर्मूलनाशः ।
अनियतगतिसर्गे वैरिवर्गे प्रयुक्तं
किमिव भवति पुंसस्तुङ्गधाम्नोऽपि धाम ? ॥ ४४ ॥
राज्यं कुलकलत्रं च नेष्टं साधारणं द्वयं ।
भुङ्क्ते सार्धं परैर्यस्तन्न नरः पशुरेव सः ॥ ४५ ॥
लब्धा अपि श्रियो यान्ति पुंसां भोक्तुमजानताम् ।
अबद्धाः कुञ्जरेन्द्राणां पुलाका इव हस्तगाः ॥४६॥
वरं वनाधिवासोऽपि वरं प्राणविसर्जनम् ।
कुलाभिमानिनः पुंसो न पराज्ञाविधेयता ॥ ४७ ॥
वरं विभववन्ध्यता स्वजनभावभाजां नृणा-
मसाधुचरितार्जिता न पुनरूर्जिताः संपदः ।
कृशत्वमपि शोभते सहजमायतौ सुन्दरं ।

विपाकाविरसा न तु श्वयथुसंभवा स्थूलता ॥ ४८ ॥
वरं क्षिप्तः पाणिः कुपितफणिनो वक्त्रकुहरे
वरं झंपापातो ज्वलदनलकुण्डे विरचितः ।
वरं प्राशप्रान्तः सपदि जठरान्तर्विनिहितो
न जन्यं दौर्जन्यं तदपि विपदां सद्म विदुषाम् ॥४९
स्वार्थेश्चन्द्रः किमिह कुरुते नाकिमार्गस्थितोऽपि
वृद्धौ वृद्धिं श्रयति यदयं तस्य हानौ च हानिम् ।
अज्ञातो वा भवति महतः कोऽप्यपूर्वस्वभावो
देहेनापि व्रजति तनुतां येन दृष्ट्वान्यदुःखम् ॥ ५०॥
विद्यानां स्फुरितं प्रीत्यै स्त्रीणां लावण्यवद्बहिः ।
अन्तर्भवतु वामा वा किं विचारैरतीन्द्रियैः ? ॥५१॥
विपच्च संपदे पुण्यात्किमन्यत्तत्र गण्यते ? ।
भानुर्लोकं तपन् कुर्याद् विकासश्रियमम्बुजे ॥५२॥
विपरीते सति धातरि साधनमफलं प्रजायते पुंसाम् ।
दशशतकरोऽपि भानुर्निपतति गगनादनवलम्बः ५३
विमत्सराणि चेतांसि महतां परवृद्धिषु ।
मत्सराणि तु तान्येव क्षुद्राणामन्यवृद्धिषु ॥ ५४ ॥
विवृणोति खलोऽन्येषां दोषान् स्वांश्च गुणान् स्वयम् ।
संवृणोति च दोषान् स्वान् परकीयान् गुणानपि ॥५५
वृक्षान् कण्टकिनो बहिर्नियमयन् विश्लेषयन् संहिता-
नुत्खातान् प्रतिरोपयन् कुसुमितांश्चिन्वंल्लघून् वर्धयन्।

उच्चान् संनमयन् पृथूंश्च कृशयन्नत्युच्छ्रितान् पातयन् ।
माळाकार इव प्रयोगनिपुणो राजन्! मही पालय ५६

व्रजति न पुरुषाणामेकयावस्थया वा
समय इति विदग्धाः कीर्तयन्तीह लोके ।
भुवनतलमशेषं द्योतते शीतरश्मिः
स च समयवशेन क्षीयते वर्धते च ॥ ५७ ॥

शङ्कमानमना निद्रां तस्करो जातु नाश्नुते ।
कुरङ्ग इव वित्रस्तो वीक्षते सकला दिशः ॥ ५८ ॥

शिष्टोऽपि दुष्टसङ्गेन विजहाति निजं गुणम् ।
नीरं किं नाग्नियोगेन शीतळत्वं विमुञ्चति? ॥ ५९ ॥

शिष्टावासः कुतस्तत्र दुर्मन्त्री यत्र भूपतौ ?।
श्येनैश्वर्ये तरौ यत्र कुतस्तत्रापरे द्विजाः ? ॥ ६० ॥

सद्भिरभ्युषिता धात्री संपूज्येति किमद्भुतम् ?।
काळायसं हि कल्याणं कल्पते रसयोगतः ॥ ६१ ॥

समदुःखसुखा एव बन्धवो ह्यत्र बान्धवाः ।
दूता एव कृतान्तस्य दुर्दकाले पराङ्मुखाः ॥ ६२ ॥

सत्यं दूरे विहरति समं साधुभावेन पुंसां
धर्मश्चित्तात्सह करुणया याति देशान्तराणि ।
पापं शापादिव च तनुते नीचवृत्तेन सार्धं
सेवावृत्तेः परमिह परं पातकं नास्ति किंचित् ॥६३॥

सन्तो गुणेषु तुष्यन्ति नाविचारेषु वस्तुषु ।
पादेन क्षिप्यते ग्रावा रत्नं मौलौ निधीयते ॥ ६४ ॥
सामसाध्येषु कार्येषु को हि शस्त्रं प्रयोजयेत् ? ।
मृतिहेतुर्गुडो यत्र कस्तत्र विषदायकः ? ॥ ६५ ॥
साधोर्विनिर्माणविधौ विधातु-
श्च्युताः कथंचित् परमाणवो ये ।
मन्ये कृतास्तैरुपकारिणोऽन्ये ।
पाथोदचन्द्रद्रुमचंदनाद्याः ॥ ६६ ॥
संसर्गेण गुणा अपि भवन्ति दोषास्तदद्भुतं नैव ।
स्थितमधरे रमणीनाममृतं चेतांसि कलुषयति ॥६७॥
स्रक्पुष्पमिव निसर्गाद्गुणेषु नृपतिः पराङ्मुखः प्रायः ।
कोश इवात्मविदारिणि निस्त्रिंशे संमुखो भवति ॥६८
हरति कुमतिं चित्ते मोहं करोति विवेकतां
वितरति रतिं सूते नीतिं तनोति विनीतताम् ।
प्रथयति यशो धत्ते धर्मं व्यपोहति दुर्गतिं
जनयति नृणां किं नाभीष्टं गुणोत्तमसंगमः ? ॥६९॥

---

## परीक्षा ।

१ कानि रूपाणि सन्ति? बृंहितानि, उदन्यन्, अश्नतः, सुरभीकुरुते, अरुन्तुदम्, विरोद्धव्याः, उदयमानम्.

२ समासा विगृह्यन्ताम् । शीतरश्मिः, नाकिमार्गस्थितः, रमितत्रपुषम्, पाटलपुष्पवासितम्.

३ अस्मिन् पाठे केऽपि पञ्चविंशतिः श्लोकाः कण्ठसन्निहिताः क्रियन्ताम् ।

४ वाक्ये समुपयुज्यन्ताम् । ऋते, स्थाने, प्र + भू, क्लृप्, वरम्–न.

५. प्रयोगान्तरं विधीयताम् ।

( अ ) प्रकटीक्रियते केन विश्वस्यानुदितो जने ?

( आ ) किं प्रार्थ्यते सोऽत्र हिताय साधुः ?

( इ ) धैर्यं विपदि कर्तव्यं साहसं समराङ्गणे ।

( ई ) स च समयवशेन क्षीयते वर्धते च ।



अधस्तनवागरचनाविशेषा हृदयसान्निहिताः क्रियंताम् ।

अकिञ्चनस्त्वं तु निजगेहे चिरस्थायीति प्रतिभाति ।
अत एव मयैतस्मिन्ननुचितसाहसे मनःप्रसङ्गो विहितः ।
अविदुष्टमतिर्मंत्री महीकान्तमयाचत ।
आत्मैकशासनप्राज्यं राज्यमष्टादिनावधि ॥
अतिधूर्तो मम भ्राता येनेयता कालेन लोचनोत्सवोऽयमुद्यानदेशो मे चक्षुर्गोचरमपि न प्रापितः ।
अद्य तु निश्चितं मृत्युना केशेषु गृहीतोऽस्म्यहम् ।
अधुनाहं सर्वथा संपादितार्थो वर्ते ।
अधस्ताद्धि व्यात्तमुखाः फणिनस्त्वत्पतनमुत्प्रेक्षमाणा इव स्थिताः ।
अनंतरं व्रणवेदना असहमानः कालियकः पञ्चत्वं गतः ।
अनवाप्तधनोऽपि जनः सकिंचने भवति चाटुतापात्रम् ।
अत्र गृह्यतेऽयं गृहीत इति तं पलायमानं हरिणं दूरमन्वसरद्राजा ।

अयं च मे कालः प्रतापमारोपयितुम् ।

अयं जनः पराधीनं जीवितं न कदाचमपि धारयेत् ।

अशुभकथनं मे दुःखमावहति ।

असौ मोघप्रयास एव संवृत्तः ।

अस्मद्राज्यस्य भरतराजः न कदाचिदपि प्रभवति ।

अहो गुर्वपि विप्रयोगदुःखमारोपितोऽयं वराकः ।

आक्रमच्च पञ्चमं वयः ।

आशावशोऽयं पथिको व्यसनगतमात्मानं न विभावयति ।

इतो व्याघ्र इतस्तटी ।

इतश्च चलेऽपि लक्ष्येऽनपराद्धेनेषुणा नरपालस्य हर्षोऽति-
भूमिं गतः ।

उचितापि प्रार्थना वरं विहन्तुम् ।

ऋते तमांसि द्युमणिर्मणिर्वा विना काचैः स्वगुणं व्यनक्ति ।

एवं चास्मद्राज्यं सर्वेषां द्विषामामिषतां यायात् ।

एतेन महीपातिर्युक्तिवादेन शशादनस्योत्तरावकाशमप्यहरत् ।

कः कालः समरगतस्याभिमन्योः ।

कश्चन मृतकल्पः सारमेयो भवदनुग्रहं प्राप्तः ।

कृतं कृतं तव श्रमेण ।

कमला कंटकाकुलपदेव न क्वापि धत्ते पदम् ।

किं मे नक्षत्रैः ?

खल्वयमध्वगो जीवितसंशये वर्तते ।

जीवकस्यान्तःकरणमस्पृशत् परमानुकम्पा ।

जीवितविषये नष्टाशो दैवायत्तोऽतिष्ठत् ।

ततश्च ब्राह्मणः किंकर्तव्यतामूढोऽजायत ।

ततःप्रभृति तस्य चेतो मृगयाविक्लवं संवृत्तम् ।

तदनुजानीहि मां पुत्रप्रतिपादनाय ।

तदा निर्वेदमापन्नः स सहसा सुदर्शनयक्षस्य मनसास्मरत् ।

तन्मा युद्धस्य परिपन्थिनी भव ।

तत्रैवावस्थातुं पक्षपाति मे हृदयम् ।

तस्य बाल्यात् प्रभृति मृगयायां गाढाभिनिवेश आसीत् ।

तां लोकित्वा च नृपतिरहो ! अनिमित्तं जातमनिमित्तं जातमिति मनसि कुर्वाणो रणरणकमारूढः ।

तुल्यप्रतिद्वंद्वि युद्धं प्रसृतम् ।

तेन भरतेशः परमनुशयं गतः ।

त्वया कलभेन यूथपतिरनुकृतः ।

दानान्नान्यः श्रेयान् धर्मः ।

दाशरथेर्हृदयमपि स्नेहेनाभ्यष्यन्दत ।
दाशरथिर्जनापवादात् पत्नीत्यागे मतिमधत्त ।
दिष्ट्या वर्धसे त्वं पुण्यजन्मना ।
धर्मकृत्यविधाने कृतनिश्चयमात्मानमकुतोभयं मन्ये ।
धनुर्विद्यायां च तौ भ्रातरौ रामलक्ष्मणावप्यतिशयाते स्म ।
धर्मसंरक्षणार्थैव प्रवृत्तिर्हि महामुनेः ।
न कदाप्यस्य कुमारस्य कर्णवर्त्म श्रीनेमिनाथस्य नाम समागन्तव्यम् ।
न मह्यं रोचते क्रीडनकम् ।
न श्रेयसे भवति विक्रमशालिनोऽपि कोपः परेष्वति-बलस्य समुन्नतेषु ।
नृपनन्दनस्तस्य परलोकसुखे बद्धास्थोऽभवत् ।
निसर्गजं तमो नूनं महतापि सुदुस्त्यजम् ।
नेमिस्वामिने शतं मे प्रणामाः ।
नो चेद्वयं तु भक्त्या मृतकल्पा भवामः स्म ।
परोपदेशे पाण्डित्यं सर्वेषां सुकरम् ।
परमपूज्येन गुरुणास्मासु सर्वेषु महीयं समं विभक्ता ।
पश्चाद्वलं च तुमुलं कृतम् ।
पादत्रयप्रमाणां तां तस्मै प्रत्यशृणोद्ध्रुवम् ।

पारावतस्तस्याङ्काश्रयं प्राप्नोत् ।

प्रभोर्दर्शनमेव तस्य विरक्तयेऽलम् ।

प्रभोः संदेशमन्तरेण श्रीबाहुबली परिगृहीतार्थः कृतः ।

बालराज! क्षम्यतामयं भवद्भृतिविघातको जनः ।

बालस्यापि ते महान् पराक्रमो मुग्धस्वभावेऽपि ।

भयेन विवर्णवदनो द्विजः ससंभ्रमं स्वप्राणरक्षार्थं सत्वरं जङ्घाबलमवालम्बत ।

भयेन तस्य वदनं लुप्तद्युति जातम् ।

भरतेश्वराय भुजबली भृशमकुप्यत् ।

भवतो निर्भयवृत्त्या परवानयं जनः संवृत्तः ।

भवतासंरक्षितस्य तस्य सुतरामेव किञ्चिन्न पश्यामि ।

भानुर्लोकं तपन् कुर्याद् विकासश्रियमम्बुजे ।

भिक्षादानरूपेण कपोतमिमं क्षुधार्ते मयि वितीर्य त्वया महाधर्मविदा भवितव्यम् ।

भ्रातृद्वयेन सर्वापि विद्या निजौष्ठगता कृता ।

भ्रातृयुगलस्य चेतसि महता कुतूहलेन कृतं पदम् ।

मत्सकाशादलब्धार्थी कामं नान्यत्र गच्छति !

मरणान्न बिभेषि किम् ?

मृगसहचरा पलायमाने कृष्णसारेऽधिज्यकार्मुके राज्ञि चाकस्माच्चक्षुरयच्छत् ।

मौनावलम्बनमेव पर्याकुलयति मे हृदयम् ।

यदि भक्ष्येण विनाकृतोऽहं भवता तर्हि नूनमत्रैवाहं पञ्चत्वं गच्छेयम् ।

यत्र चित्तवृत्तिर्मम त्रपते तदुपादाय विधात्रैव पुरःस्थितम् ।

यत्सत्यं जगन्मातरि विशुद्धवृत्तावपि त्वय्यपराद्धोऽस्ति प्रभू रामचन्द्रः ।

युवराजः कोपं विहाय स्वयमेव लज्जामातनोत् ।

व्यसनगतस्यास्य कपोतस्य त्वं दयसे ।

राजा दोलायमानेन चेतसा चिंतामाविशत् ।

रामो भृशं संक्रुद्धस्तौ लवकुशौ मृत्योर्गोचरं नेतुं साराश्माराचानास्यत् ।

रामलक्ष्मणौ प्रमोदस्य परां कोटिमधिगतौ ।

वचनं कर्णे कृत्वा राजा वाचंयमोऽभवत् ।

वर्धमानकुमारस्तु भयेन विच्छायतां न गतवान् ।

वरमद्य कपोतः श्वो मयूरात् ।

विद्रवतस्तस्य धराप्यपरिमितेवाभवत् ।

स उत्ताम्यता हृदयेन कुतूहलं धारयितुं नापारयत् ।

स स्वसुतायाः कारणाद्द्यूतसंपातं कृतवान् ।

सत्यं समरगोचरो मे वत्सः ! ।

साधु, वर्धमान ! साधु त्वयाद्य धीरं विक्रान्तमाचरितम् ।

सात्मनः स्वप्नवर्णनेन तं विदितवृत्तान्तं कृतवती ।

सीताया निरुन्धत्या अपि युद्धाय बद्धपरिकरौ तौ साकेता-
भिमुखौ प्रस्थितौ ।

स्वजयमुद्दिश्य दाशरथिर्मनसा संदेहदोलामारोहत् ।

श्रीनारदेन वनवासादारभ्य सीतात्यागं यावत्सर्वमपि
रामवृत्तं सविशेषं वर्णितम् ।

क्षितिपस्तु तापादन्तःशल्य इवासीत् ।



# संजीवनी ।

— १ —

अकुतोभयः — ( न कुतो भयं यस्य । ) कुठूनही भीति नसलेला. ( जिसे कहीं से भी भय नहीं ), महामण्डलेश्वरः — (मण्डलानामीश्वरः । महांश्चासौ मण्डलेश्वरश्च । ) पुष्कळ देशांचा मालक. ( अनेक देशोंके स्वामी ). समुद्रं चन्द्र इव— ज्याप्रमाणें समुद्राला चंद्र आपल्या जन्मानें भूषित करितो. [ जैसे समुद्रको चंद्रमा अपने जन्मसे विभूषित करता है]. वृद्धिमपुष्यत्—वाढूं लागला.[बढने लगा]. महान्तमपि....ज्ञातवान्— बराच वेळ लोटला तरी त्याला कळलें नाहीं. ( बहुत देर होनेपर भी उसे मालुम नहीं हुआ ). ज्ञातवान् — ज्ञा. [ ९ उ. ] कर्तरि भू. धा. वि. पुं. प्र. ए. क्रीडाव्यापृतेषु सर्वबालेषु— सत्सप्तमी; सर्व मुलें खेळांत गुंग झालीं असतां. ( सब लडके खेलमें मस्त थे तब ). आवेष्टय स्थितः— वेटाळा घालून बसला. [ वेष्टन डालकर बैठ गया ]. आवेष्ट्य— ( आ + वेष्ट् ) ल्यबन्त. यथायथमधोऽपतन्—पटापट् खालीं पडलीं. [ एकदम नीचे गिरे ]. भयेन विच्छायतां न गतवान् —भीतीनें तो गोरामोरा झाला नाहीं. ( वह भयसे हक्काबक्का नहीं हुआ ). गतवान्— गम् [ १ प. ] कर्तरि भूतकाल धा. वि. पुं. प्र. ए. अन्यवृक्षान्तरिताः —दुसऱ्या झाडाआड लपून [ दूसरे वृक्ष के पीछे छिपकर ]. कातरभावमापन्नाः— घाबरलेले, भ्यालेले. ( घब-

राये हुए ). मा तं रुंद्धि– त्याला अडवूं नकोस. ( उसे रोको मत ). भवद्रतिविघातकः— आपल्या आनंदाचा भंग करणारा. (तुम्हारे आनंदको भग्न करनेवाला). भापयितुम्—भी [ ३ उ. ) प्रयोजक तुमन्त; भिवविण्यासाठीं. [ भय दिखानेके लिए ]. मनःप्रसङ्गो निहितः– लक्ष घातलें. ( ध्यान दिया ). विहितः– ( वि + धा ) कर्मणि भू. धा. वि. भीषयमाणस्यः—( भी ) प्रयोजक वर्तमान धा. सा. विशेषण ष. ए. भिवविणाऱ्यास [ भय दिखानेवाले को ]. परवानयं जनः संवृत्तः— मी ( आपला ) चाकर बनलों. [ मैं आपका किंकर बन गया ]. मृतकल्पाः भवामः स्म— आम्ही [जवळ जवळ] मेल्यासारखें झालों होतों.(हम [करीब २] मरे जैसे हुए थे). भवामः स्म— स्म ह्या अव्ययासह वर्तमान काळाचें रूप वापरलें असतां तें भूतकाळ दर्शवितें. जसें:—वसति स्म। [राहिला होता. ] [ स्म पद के साथ उपयुक्त वर्तमान काल का क्रियापद भूतकाल के अर्थ का बोध करता है जैसे – वसति स्म । [ रहता था ]

२

उपकारः....प्रत्यर्पयितव्यः- उपकाराची परत फेड उपकारानें करावी. [ उपकारका ऋण उपकारसे चुकाये ]. प्रत्यर्पयितव्यः– परत फेड करावी; प्रति+ऋ(१प.) प्रयोजक विध्यर्थ विशेषण; य, तव्य, व अनीय प्रत्ययुक्त विशेषण. दृक्पथमगात्–नजरेस पडला. [ देखने में आया ]. अन्तःकरणमस्पृशत्

परमानुकम्पा–दया उत्पन्न झाली. ( दया उत्पन्न हुई ). करतलेन परामृशन्–हातानें ( पाठ ) थोपटीत. [हाथ से (पीठ) ठोकते हुए]. क्षतविक्षतोऽसि–जबर जखमी केले. (तुम सख्त जखमी हुए हो ). मोघप्रयास एव संवृत्तः— प्रयत्न निष्फळ झाला. [प्रयत्न निष्फल हुआ]. विगतजीवितो भवेत्–प्राणाला मुकेल. ( जानसे जायगा ). परलोकसुखे....भवत्–परलोक सुखाविषयीं कळकळ करूं लागला. [परलोकके सुखके लिये तीव्र इच्छा की]. मूलमंत्र–हा पञ्चणमोकार मंत्र होय. (पंचणमोकार मंत्र). पञ्चत्वं गतः–मरण पावला.(मर गया). भवदनुग्रहं प्राप्तः— आपला ऋणी झाला. [आपका ऋणी हुवा]. कृतार्थीकृतोऽहं भवता–मला आपण कृतकृत्य केलें. [आपने मुझे कृतार्थ किया ] कृतार्थीकृतः–च्विप्रयोग. का वा....वाणी?–आपलें औदार्य कोणत्या शब्दांत सांगावें ?[ आपके औदार्यको किन शब्दो में कहें?]. यस्मिन् कस्मिन्नपि– हलक्या कामांत [ हलके कार्यमें ]. अञ्जलिं बध्द्वा—हात जोडून. [ हाथ जोडकर ]. दिष्ट्या वर्धसे.. जन्मना–तुझ्या पुण्यप्रद जन्माबद्दल मी तुझें अभिनंदन करितों. [ तुम्हारे पुण्यप्रद जन्म के लिए मैं तुम्हारा अभिनंदन करता हूं ]. संपादितसार्थो वर्ते–माझ्या सर्व इच्छा पूर्ण झाल्या आहेत [मेरी सर्व इच्छा में पूर्ण हुई हैं]. परोक्षतामभजत्–गुप्त झाला. [अदृश्य हुआ]. जीवग्राहम्— जिवंत. ( जीवंत ).

२

सौराष्ट्रेषु–देश वाचक शब्द नेहमीं बहुवचनीं असतात.

( देशवाचक शब्द हमेशा बहुवचनी रहता है ). विदितवृत्तान्तं कृतवती– हकीगत कळविली. [ समाचार सुनाया ]. कृतवती– कृ [ ८ उ. ] कर्तरि भूत. धा. वि. स्त्री. प्र. ए. आनखशिखान्तम्— ( नखाश्च शिखा च तासामन्तः ) । तमभिव्याप्य । [पायाच्या] नखापासून [डोक्याच्या] केसापर्यंत. [नखसे केशपर्यंत]. हर्षप्रकर्षः—अत्यंत आनंद. [ बहुत आनंद ]. नामधेयमकरोत्– नांव ठेविलें. ( नाम रक्खा ). आक्रमच्च पञ्चमं वयः— पांचवें वय सरलें. [ पांचमें वर्ष को पार किया ]. श्रुतिपथमवतीर्णः— कानावर पडला. [ सुनने में आया ]. प्रभुगतम्— प्रभुविषयीं. (स्वामीके संबंधमें). कथयिष्यसि–[ कथ् ] १० प. द्वितीय भविष्यकाळ द्वि पु. ए. तूं सांगशील. ( कहोगे ). प्रभोर्दर्शनमेव तस्य विरक्तयेऽलम्—महाराजांचें दर्शनच त्याच्या वैराग्याला पुरेसें आहे. ( महाराज का दर्शन ही उसके वैराग्य के लिए पर्याप्त है). दृग्गोचरम्—दृष्टीला. ( दृष्टी को ). प्रभुगामी — ( प्रभुं गच्छति सः । ) महाराजांच्या नांवाचा.[महाराज के नाम का.] अवहितोऽस्मि—मीं सावध आहें. ( मैं सावध हूं ).

४

अथ किम्–होय. (हां). द्रष्टुकामः– ( द्रष्टुं कामो यस्य । ) पाहण्याची इच्छा करणारा. (देखनेकी इच्छा करनेवाला). भविष्यति– ( भू ) द्वितीय भविष्यकाळ तृ. पु. ए. दूतसंपातं कृतवान्— दूताला पाठविलें. (दूतको भेजा). अहो शोभनम्–– वा ! छान !

( वाह ! शाहबास ! ). गृहीतमौना तिष्ठति –गप्प राहते. [ चुप बैठती है ]. गृहीत –ग्रह् ( ९उ. ) क. भू. धा. वि. ततस्ततः – बरं पुढें. [ अच्छा ! आगे]. तपस्तपस्यंस्तिष्ठति –तप करीत आहे. ( तप करता है ).

५

प्रयोजनवशात्— कांहीं कारणामुळें. [ किसी कारणसे. ] यावत्....तावत्— कांहीं रस्ता चालून गेला नाहीं तोंच. [ कुछ दूर रस्ता तय करते ही ]. मूर्तिमान् कृतान्त इव—मूर्तिमंत जणूं यम. (मूर्तिमान् मानो यम ही). भयेन विवर्णवदनः—भीतीनें गोरा-मोरा झालेला. [ भय से हक्काबक्का हुआ ]. अङ्घ्रावलमवालम्बत—पळ काढिला. [ भाग गया ]. कण्ठं विभुज्य—मागें मान वळवून ( पीछे फिरकर ). विभुज्य– ( वि + भुज् ) ल्यबन्त. चक्षुर्विकिरति – पाहतो. ( देखता है ). किंकर्तव्यतामूढः–गोंधळून गेलेला. [विचार में पडा हुआ]. आस्थाय–( आ + स्था ) ल्यबन्त. पल्लवव्यवहितः— पानां आड लपलेला. [ पत्तों के पीछे छिपा हुआ ]. व्यवहितः— [ वि + अव + धा ] क. भू. धा. वि. वेपमानाङ्गः स्थितः—अंग लट् लट् कांपत (तो) उभा राहिला. ( कांपते हुए खडा हुआ ). दृष्टिं प्राहिणोत्— नजर फेंकली. (नजर डाली). दर्शनपथं यातः–दिसला. (दीखा). कामपि भयावस्था-मनुभूतवान्— अत्यंत भ्याला. ( अत्यंत भयग्रस्त हो गया ) यमालयं यापयेयुः–यमसदनास पाठवितील. [ यम के घरको भेजेंगे ].

